॥ श्रीः ॥

# श्रीशङ्करविजयमकरन्दसारः





प्राचीनशङ्करविजयादिभ्यः सङ्कलितः

॥ श्रीः ॥

# ॥ श्रीशङ्करविजयमकरन्दसारः ॥

प्राचीनशङ्करविजयादिग्रन्थेभ्यः सङ्कलितः ।

सङ्कलयिता

वैद्य शि. वे. राधाकृष्णशास्त्री

प्रकाशकः :

आचार्यग्रन्थ प्रचारसमितिः

९. विश्वनाथपुरम्, तेन्नूर्

त्रिशिरापल्ली

सिद्धार्थ 1980 मूल्य रू. 10-00

# Sri Sankara Vijaya Makaranda Sara

**Compiled from all Sankara Vijayas & other sources of Life history of Sri Sankara Bhagavatpada**

*Compiled by*

**Vaidya S. V. RADHAKRISHNA SASTRI,**

**25, Tanjore Tank Street, TIRUCHIRAPALLI-620002.**

*Published by*

**R. NATARAJA IYER,**

*on behalf of*

**SRI ACHARYA GRANTHA PRACHARA SAMITI**

**9, Viswanathapuram, Tennur,**

**TIRUCHIRAPALLI — 620017**

**1980** **Rs. 10-00**

॥ श्रीगुरुभ्यो नमः ॥

# ॥ पूर्वं निवेद्यते किञ्चित् ॥

कलये भगवत्पादान् कलितैः प्राच्यवाक्सुमैः ।
क्लृप्तैर्यथामतिरुचि ग्रथितैः स्वोक्तितन्तुपु ॥ (१-६८)

चिरादभिलषितोऽयं मनोरथः फलितो देशिकरूपेण दर्शिताभ्युदयायाः तस्या देव्या अव्याजया अर्भकेऽस्मिन् करुणया । तथा फलितश्च यथा महनीया अपीमं स्वादु रोचते हृद्यमिति अभिनन्दन्ति । तस्या दयानिष्यन्दसंपर्कजन्योऽयं पाकविशेषः ॥

श्रीशंकरभगवत्पादकथानिर्वहणेऽसकृत् पृथक् रुचिवैचित्र्याय, माधवीयं, व्यासाचलीयं, चिद्विलासीयं चानुसृत्य भगवत्पादचरितं सकलयता मया, तेषां प्रातिस्विकतया कथानिर्वहणे सर्वथा इतरग्रन्थसापेक्षं सामग्र्यं अन्वभावि । ततश्च काचिदाशा बलवत्युदियाय चेतसि यत्—समग्रमपि भगवत्पादचरितविषयकं ग्रन्थजातं पठानि, तेभ्यस्तेभ्यः परिनिष्पन्नं भावमाददानि, ग्रन्थात्मना सङ्कलयानि, तेन भावुकभक्तजनमनोरञ्जनं करवाणीति । तस्याः साफल्यमाशासानः, भगवत्पादावतारभूतेषु काञ्चीक्षेत्रे शिवास्थाने लोकहिताय तपस्यत्सु परमाचार्य-श्रीचरणेषु विज्ञापनामेनामकरवं, समस्तभगवत्पादचरितविषयकग्रन्थजातपठने सारसङ्कलने च अनुग्रहविधानाय । ते दयार्द्रेण दृगञ्चलेन अभयदेन करेण चान्वग्रहीषुः । तत्रैव उत्तरभारतविजययात्रानन्तरं सन्निहितेषु काञ्चीकामकोटि-पीठाधिपजगद्गुरुश्रीचरणेषु विज्ञापनामकरवं अनुग्रहविधानाय । मदीयं मनोरथ-मभिनन्दन्तस्ते तत्क्षण एव श्रीमठपुस्तकालयतः भगवत्पादचरितसंबद्धं प्राचीनमा-धुनिकं मुद्रितममुद्रितं च ग्रन्थजातं सङ्कलय्य मह्यं कृपया दत्वा, यथावकाशं

पठितुं परिशीलयितुं ग्रन्थरूपेण सङ्कलयितुं च मां सानुग्रहमादिशन्। आज्ञानुसारं अभिलषितार्थसाधयित्रीं तेषां जगद्गुरुपूज्यचरणानां करुणामेकां अवलम्ब्य श्रीभगवत्पादचरितानुसन्धाने, इतरत्र मुद्रितग्रन्थसंग्रहणे अमुद्रित-ग्रन्थान्तरमातृकान्वेषणे प्रवृत्तस्य, ततस्ततो मुद्रिता अमुद्रिताश्च ग्रन्थाः सुलभा एवासन् ॥

तेभ्यः कथाक्रमं परिशील्य सङ्कलनमुपक्रममाणस्य प्रतिग्रन्थगतः ऐतिह्यमूलकः कविकर्ममूलकश्च चरितक्रमवस्तुनिरूपणादौ मिथो विसंवादो भृशं विभ्रामकोऽभूत्। कं वा ग्रन्थं प्रधानतयाऽऽश्रित्य कथां निबध्नीयाम्? को वा ग्रन्थ एषु प्रमाणभूतः? एकस्य प्रामाणिकत्वे अन्येषामप्रामाणिकत्वापत्तिः कथं वार्येत? सर्वेषां प्रामाणिकत्वे विसंवादिषु सामञ्जस्यं कथम्? न मया नव्यैः क्रियमाणया अन्वेषणपद्धत्या भगवत्पादचरितं विमृश्यते। परं श्रीभगवत्पा-दचरितकीर्तनश्रवणस्मरणमननादिना आत्मानं भावुकांश्च भक्तान् कृतार्थयितुं किल प्रवृत्तिरेषा। इति बहुधा भ्रममाणः पुनः गुरुकृपामेव शरणं विधाय काञ्चीमगच्छम्। परमाचार्यश्रीचरणेषु विज्ञापने कृते, 'पुनः पुनः स्वयमेव पठ! सर्वं स्फुटं भायात्। ईप्सितं च सेत्स्यती'त्यन्वगृह्णन्। पुनः मूलग्रन्थान्तरान्वेषणे प्रवृत्तेन मया बहोः कालात्प्राक् ग्रन्थाक्षरे मुद्रितं जीर्णं सदाशिवब्रह्मेन्द्रसरस्वती-श्रीचरणैः विरचितं जगद्गुरुरत्नमालास्तोत्रं समासादि। कथञ्चित् तत्र लब्धप्रवेशः सपदि कमप्यानन्दमननुभूतपूर्वं अन्वभवम्। पूर्वं कदाचित् कलवैस्थ-स्वगुरुपरमगुरुवृन्दावनस्थान् परमाचार्यान् द्रष्टुं गतः। स्वीयां सर्वतोमुखीमरतिं अशान्तिं च निवेद्य, तन्निवृत्तयेऽनुग्रहार्थं विज्ञापनामकरवं परमाचार्यश्रीचरणेषु। 'यदा यदा अशान्तिः, तदा सदाशिवब्रह्मेन्द्रान् स्मर; तेषां कृतिषु कामपि पठ; शान्तिस्ते भविता' इति ते तदा अन्वग्रहीषुः। भगवत्पादचरितसङ्कलनविषया-शान्तिनिवृत्तये चाद्य स एवानुग्रहः अवलम्ब्योऽजनि। तेषां योगिवर्याणां जगद्गुरुरत्नमालास्तोत्रगतान् आदिमान् भगवत्पादचरितवर्णनपरान् ३३ श्लोकान्, असकृदपठम्-आम्रेडयन्नेवासम् ॥

सपदि कथाक्रमकारिका स्फुटा बभूव। दीप्तः पन्थाः पुरतः। प्रकाशकाः सदाशिवेन्द्राः। पूर्वयायिनः आत्मबोधेन्द्राः सुषमाकाराः। अन्ये च आप्ततमा गुरुवर्याः तस्मिन्नेव पथि गन्तव्यमधियन्ति ॥

असकृत् तत्र तत्र संशयसहस्रमुत्पद्येत। तदा तदा परमाचार्यसन्निधौ विज्ञाप्येत। ते मन्दं हसन्तः कृपातरङ्गितया दृशा जनमिमं पावयन्तः 'पुनः पुनः पठ; यत्ते साधु भाति, तथा तत्सङ्कलय; सर्वं साधु संपद्येते'ति अनुगृह्णीयु ॥

मधुकरवृत्तिर्मया गृहीता। यन्मधतया मया दृष्टं तन्मया चूषितम्। पुष्पे किमप्यवशिष्टं, कुतस्तन्नादीयते इति प्रश्नस्य नावसरः कुतश्चिद्गृहीतं कुतश्चिन्निक्षिप्येत। स्वातन्त्र्यं मधुकरस्य तथाविधम्। मधुकरः क इति विचारमकृत्वैव मधु सेव्यते बालैर्युवभिर्वृद्धैः पण्डितैः पामरैः रुग्णैररुग्णैश्च। कुत आनीतं इति जिज्ञासा नोदियात्। तथा स्वादु हृद्यं मनोरमं आह्लादकं च भवेदित्याशंसया श्रीशङ्करविजयमकरन्दः इति अभिधामदाम् ॥

जगद्गुरुरत्नमालायां अतिसंक्षिप्ततया बीजरूपेण उल्लिखितानां कथांशानां विस्तारः शङ्करविजयग्रन्थेषु तच्चरितप्रतिपादकेषु काव्येषु अन्यत्र चोपलब्धः संवादी यथारुचि तत्तद्ग्रन्थगतयैवानुपूर्व्या सङ्कलितः। तथा गृहीतानां ग्रन्थानां परिचयः पृथग्दीयते। सङ्कलितानां श्लोकानामाकरग्रन्थपरिचयः, सङ्कलने मूलमिति शीर्षके दत्तः मूलग्रन्थपरिचयकुतुकिनामुपकाराय, ग्रन्थचौर्यापवादपरिजिहीर्षया च ॥

मूले सङ्कलितः कथाक्रमः मन्मनोरुचिरः। न तेन ग्रन्थान्तरस्थो विसंवादी कथाक्रमः अप्रामाणिकः शङ्कितः। सर्वेऽपि ग्रन्थकर्तारः ऐतिह्यमेवात्र प्रमाणमुल्लिखन्ति। स्पष्टमुद्घोषयन्ति च तथा। 'ऐतिह्यमाश्रित्य वदन्ति चैवं तदेव मूलं मम भाषणेऽपि'। इति वदन्ति व्यासाचलयोगिनः (व्यासाचलीये ८-७६) पद्मपादीयटीकाया दाहप्रसंगे। अत्रैव माधवोऽप्यमुमेव श्लोकं

निबद्धवान् (माधवीये १४-१६ श्लो)। ऐतिह्यं विभिन्नम्। न कोऽपि ऐतिह्यमेकरूपतया स्रष्टुमीष्टे। लोको भिन्नरुचिः। न सर्वः सर्वमाददाति। यद्यस्मै रोचते स तदाददाति। अयमेव हेतुः कस्यचिदैतिह्यस्य ग्रहणे, इतरस्य चाग्रहणे।

अन्ते च स्मरामि भक्त्या तान् स्मरणीयान् चित्सुखव्यासाचलानन्दगिरि-माधव - लक्ष्मण - राजचूडामणिमखि - रामभद्रमखिप्रमुखान् प्राक्तनान् कवीन्, यैर्विरचितान् भगवत्पादचरितविषयकप्रबन्धानुपजीव्य ग्रन्थोऽयं प्रकाशितः।

एवं यथामतिरुचि संकलितं संपूर्णं विस्तृतं सटिप्पणं श्रीशङ्करविजय-मकरन्दाख्यं ग्रन्थं सम्मुद्र्य १३-५-१९७८ दिने कालट्यां संपन्ने श्रीशङ्कर-भगवत्पादकीर्तिस्तंभप्रतिष्ठावसरे श्रीकाञ्चीकामकोटिपीठाधिपति - जगद्गुरु - श्रीशङ्कराचार्य - श्रीजयेन्द्रसरस्वतीश्रीचरणानां चरणकमलयोः उपाहरम्। विस्तृतस्य तस्य ग्रन्थस्य संक्षेपरूपोऽयं ग्रन्थः श्रीशङ्करविजयमकरन्दसाराख्यः। स च त्रिशिरःपुरनिवासिना श्री आर् नटराजार्यमहाशयेन आचार्यग्रन्थप्रकाशन-समितिद्वारा अधुना प्रकाश्यते॥ ग्रन्थयोरनयोः सामग्र्यं साफल्यं च भावुक-भगवत्पादभक्तहृदयायत्तम्। तत्प्रार्थये "अर्पयत दृशं दयया, परिचरतः स्खलनं सहजमिति दोषान् मा गणयत, विरलानपि गुणानभिनन्दत" इति। वस्तुतस्तु मे मनोरथः संपूर्ण एव, श्रीभगवत्पादचरिताब्धितीरे संचरता मया संकलितैः यदृच्छालब्धैः श्रीभगवत्पादचरितानुभवमुक्ताकणैः॥

शि. वे. राधाकृष्णशास्त्री।

२५. तञ्जावूर्कुलंचेरु,
त्रिशिरःपुरी 620002
11—3—1980

# श्रीशङ्करविजयमकरन्दसारस्य सङ्कलने मूलभूतानां ग्रन्थानां परिचयः ।

---

## १ पुराणानि:—

| | |
|---|---|
| शिवरहस्यम् | लिङ्गपुराणम् |
| कूर्मपुरपुराणम् | वायुपुराणम् |
| भविष्योत्तरपुराणम् | शिवपुराणम् |
| मार्कण्डेयसंहिता | |

## २ शङ्करविजयग्रन्थाः—

१ बृहच्छङ्करविजयः—चित्सुखाचार्यविरचितः । अस्य केचनैवांशाः पूर्वतनैः स्वकीयेषु ग्रन्थेषु उद्धृताः उपलभ्यन्ते । न पूर्णतया ॥

२ प्राचीनशङ्करविजयः — अस्यापि केचनैवांशा उपलभ्यन्ते ॥

३ ब्रह्मानन्दीयशङ्करविजयः — सर्वज्ञात्मश्रीचरणानां शिष्यो गाणपतो ब्रह्मानन्दः स्वान्तेवासिने योगानन्दाय भगवत्पादकथां विवृणोति दशसहस्राधिकैः पद्यैः । अस्य अमुद्रितस्य हस्तलिखिता मातृका कुम्भघोणस्थमहादेवशास्त्रिनिकटे उपलभ्यते । केचन तत उद्धृता अंशाः श्रीभगवत्पूज्यपादपूजाकल्पे महादेवशास्त्रिभिः मुद्रिताः । मदवलोकनाय तैर्दत्ता सा मातृकेति तेभ्यो धन्यवादः ।

४ व्यासाचलीयः शङ्करविजयः । श्रीकाञ्चीकामकोटिपीठाधिपाः (१४९८-१५०७ क्रिस्तुशके) महादेवेन्द्रसरस्वती श्रीपादाः अस्य कर्तारः । व्यासाचलगुहायां निरन्तरस्थित्या व्यासाचल इति प्रसिद्धा एते । मदरास् गवर्नमेण्ट् ओरियेटल् मानुस्क्रिप्ट्स् लैब्ररी द्वारा प्रकाशितोऽयं ग्रन्थः ।

५ आनन्दगिरीयः शङ्करविजयः—अनन्तानन्दगिरिनाम्ना भगवत्पादान्तेवासिना ग्रथितः। सेण्टर आफ् अड्वान्स्ड् स्टडि इन् फिलासफि, यूनिर्सिटि आफ् मदरास् द्वारा प्रकाशितः।

६ माधवीयशङ्करविजयः — संक्षेपशङ्करविजयाख्यः डिण्डिमाद्वैतराज्यलक्ष्म्याख्य व्याख्याद्वयोपेतः।

७ चिद्विलासीयः शङ्करविजयविलासः चिद्विलासविज्ञानकन्द-संवादात्मकः।

८ शाङ्करदिग्विजयसारः — सारस्वतसदानन्दविरचितः दुन्दुभ्याख्य-व्याख्यायुतः।

९ गोविन्दनाथीयं श्रीमच्छङ्कराचार्यचरितम्-तिरुप्पुणित्तुरतः दिवाकर द्विजेन्द्रेण प्रकाशितम्।

१० केरलीयशङ्करविजयम् - सुषमादौ उदाह्रियमाणमेतत् तावतांशेन उपलभ्यते। न पूर्णो ग्रन्थोऽत्रालोकि।

३ काव्यानिः —

१ पतञ्जलिचरितम्—रामभद्रदीक्षितविरचितम्। पतञ्जलेश्चरितं मुख्यमत्र। स्वशिष्यस्य गौडस्यानुग्रहाय चन्द्रशर्मरूपेण पुनरस्यावतारं गौडानुग्रहं यत्याश्रमस्वीकरणेन गोविन्दभगवत्पादाख्यया शङ्करानुग्रहं च प्रस्तौति काव्यमिदम्।

२ शङ्कराभ्युदयम्—राजचूडामणिदीक्षितविरचितम्। सहृदयायां मूलमात्रं मुद्रितं समग्रम्। अडयार् कोशालये षष्ठाध्यायपर्यन्ता सव्याख्या मातृकोपलभ्यते।

३ गुरुवंशकाव्यम्। विद्वद्वालक काशीलक्ष्मणशास्त्रिप्रणीतम्। सप्तमसर्गान्तं सव्याख्यं, मूलमात्रं समग्रं च श्रीवाणीविलासमुद्रणालयेन प्रकाशितम्।

शृङ्गेरी जगद्गुरु श्रीसच्चिदानन्दभारती (१७७२-१८१४) श्रीपादानामाज्ञया प्रणीतमिदम्। आदिमं सर्गत्रयं भगवत्पादचरितं वर्णयति।

४ शङ्करमन्दारसौरभः—नीलकण्ठकृतः शङ्करमन्दारसौरभसमीराख्यया व्याख्यया युतः अमुद्रितः। मद्गुरुवर श्री वा. ह. सुब्रह्मण्यशास्त्रिपादसकाशात्प्राप्ता अस्य हस्तलिखिता मातृका।

५ आचार्यदिग्विजयः।

४ भगवत्पादस्तुतिग्रन्थाः—

१ तोटकाष्टकम्—आनन्दगिरि (तोटक) विरचितम्।

२ जगद्गुरुरत्नमालास्तवः—सदाशिवब्रह्मेन्द्रसरस्वतीविरचितः कामकोटिपीठाधिप—आत्मबोधेन्द्रसरस्वतीश्रीपादानां नाथनया कृतः। कामकोटिपीठाधिपगुरुपरंपरावर्णनात्मकेऽस्मिन्ग्रन्थे प्रथमे त्रयस्त्रिंशच्छ्लोकाः भगवत्पादचरितं वर्णयन्ति। श्रीशङ्करविजयमकरन्दः तत्सारश्च एतद्ग्रन्थस्थां कथाकारिकामेव सर्वात्मना चरितसन्निवेशने अनुसरति। स्तवस्यास्य व्याख्या सुषमा आत्मबोधेन्द्रसरस्वतीश्रीचरणैः कृता प्राचीनानां बहूनां शङ्करविजयादीनां उदाहरणेन शङ्करचरितसन्निवेशे बहूपकरोति।

३ पुण्यश्लोकमञ्जरी—व्यासाचलमहादेवेन्द्रसरस्वतीप्रशिष्यैः श्रीसर्वज्ञसदाशिवबोधेन्द्रसरस्वतीश्रीपादैः कामकोटिपीठाधिपैः आत्मनः प्राक्तनानां ५५ आचार्याणां पुण्यश्लोकानां जननस्थल-दीक्षानाम-पितृनाम-सिद्धिस्थलादिस्मरणार्थं कृता।

४ भगवत्पादसप्ततिः—जगन्नाथकविविरचिता श्लोकसप्ततिः। शङ्करजयन्त्युपहारे सङ्कलिता।

५ यतिसार्वभौमोपहारः—शङ्करकिङ्कर-ब्रह्मानन्दकर्मन्दिनरकण्ठीरवकवि-प्रणीतः अशीतिश्लोकात्मकः। शङ्करजयन्त्युपहारे संकलितः।

६ जगद्गुरुपारंपर्यस्तुतिः—कूडलीशृंगेरिमठीया। गुरुपरंपरानाम-मालायुता। श्रीमज्जगद्गुरु कूडलीशृंगेरीमहासंस्थानेन प्रकाशिता।

७ शतश्लोकी—पोलगं रामशास्त्रिकृता।

८ गुर्वष्टकम्—चित्सुखाचार्यविरचितम्।

९ गुर्वष्टकम्—ब्रह्मविद्यायां प्रकाशितं अज्ञातकर्तृकम्।

१० श्रीशङ्करार्यपदावलम्बनस्तोत्रम्—जगद्गुरु श्रीसच्चिदानन्दशिवाभिनव-नृसिंहभारतीस्वामिविरचितम्।

११ गोवर्धनपीठजगद्गुरुनाममालास्तोत्रम्।

१२ वासनादेहस्तुतिः भगवत्पादानामतिमानुषचर्यास्तवनपरा।

१३ श्रीशङ्कराचार्याष्टोत्तरशतनामस्तोत्रम्।

१४ श्रीशङ्करभगवत्पादाचार्याष्टोत्तरशतनामावलिः महामहोपाध्याय पञ्चा-नाडु गणपतिशास्त्रिभिः रचिता। शङ्कराय नमः इति षडक्षर्याः प्रत्यक्षर-मष्टादशभिः नामभिः सङ्कलिता।

१५ श्रीशङ्कराचार्यचतुर्विंशतिनामावली।

१६ श्रीशङ्करभगवत्पादाचार्यसहस्रनामस्तोत्रम्— हिन्दुमतकलाचारप्रचार-संघप्रकाशितम्।

१७ श्रीशङ्करभगवत्पादसहस्रनामस्तोत्रम्—श्रीभाष्यस्वामिप्रणीतम्।

१८ शङ्करभगवत्पादपूजाकल्पः।

१९ हुल्सूचूद्दष्टः कोशः—शृंगगिरिगुरुपरंपरास्तोत्रम्।

५ भगवत्पादशिष्यप्रणीताः ग्रन्थाः—

| | |
|---|---|
| १ हस्तामलकीयम् | हस्तामलकाचार्यप्रणीतम् |
| २ श्रुतिसारसमुद्धरणम् | तोटकाचार्यप्रणीतम् |
| ३ नैष्कर्म्यसिद्धिः | सुरेश्वराचार्यप्रणीता |
| ४ बृहदारण्यकोपनिषद्वार्तिकम् | सुरेश्वाराचार्यप्रणीतम् |
| ५ तैत्तिरीयोपनिषद्वार्तिकम् | सुरेश्वराचार्यप्रणीतम् |
| ६ पद्मपादिका टीका | पद्मपादाचार्यप्रणीता |
| ७ संक्षेपशारीरकम् | सर्वज्ञात्ममुनिप्रणीतम् |

६ आचार्यस्मृतिदा इतरे ग्रन्थाः—

स्वकीयग्रन्थेष्वादावन्ते मध्ये च भगवत्पादानां तत्पूर्वाचार्याणां च प्रणतिः कृता प्राच्यैर्बहुभिराचार्यैः। तैः कृताः प्रणतिश्लोकाः प्रत्यास्वादमादावन्ते च सन्दब्धाः भगवत्पादादीनां अनुग्रहलाभाय, तेषां ग्रन्थकर्तॄणां पुण्यस्मरणाय च अस्मिन् ग्रन्थे। ग्रन्थनाम ग्रन्थकर्तृनाम च यथोद्धरणक्रमं उल्लिख्यते।

१ द्रविडात्रेयदर्शनम् - पोलगं रामशास्त्री।

२ शारीरकमीमांसाभाष्यवार्तिकम् - अभिनवद्रविडाचार्याभिधबाल-कृष्णानन्दसरस्वतीस्वामिनः।

३ बालमनोरमा - सिद्धान्तकौमुदीव्याख्या - वासुदेवदीक्षितः।

४ नटराजस्तवः - अप्पयदीक्षितेन्द्राः।

५ ब्रह्मसूत्रानुगुण्यसिद्धिः - करुङ्गुलं कृष्णशास्त्री।

६ ब्रह्मविद्याभरणम् - अद्वैतानन्दसरस्वतीस्वामिनः।

७ संक्षेपशारीरकटीका तत्त्वबोधिनी - नृसिंहाश्रमस्वामिनः।

८ तैत्तिरीयोपनिषद्भाष्यटीका - बालकृष्णानन्दसरस्वतीस्वामिनः ।

९ भाष्यभानुप्रभा - भट्टत्र्यंबकशास्त्री ।

१० अंबास्तवव्याख्या - अर्धनारीश्वरदीक्षितः ।

११ किरणावावली-सोपानपञ्चकव्याख्या बालकृष्णानन्दसरस्वतीस्वामिनः ।

१२ भामतीतिलकम् - अल्लालसूरिः ।

१३ मञ्जरी - षट्पदीस्तवव्याख्या - शङ्करानन्दतीर्थस्वामिनः ।

१४ हरिहराद्वैतभूषणम् - बोधेन्द्रसरस्वतीस्वामिनः ।

१५ वेदान्तकल्पलतिका - मधुसूदनसरस्वतीस्वामिनः ।

१६ सिद्धान्तलेशसंग्रहः - अप्पयदीक्षितेन्द्राः ।

१७ चित्सुखी - चित्सुखाचार्याः ।

१८ सिद्धान्तबिन्दुः - मधुसूदनसरस्वतीस्वामिनः ।

१९ अद्वैतामृतबोधः ।

२० अपरोक्षानुभूतिदीपिका - विद्यारण्यस्वामिनः ।

२१ अद्वैतभूषणम् - शाङ्करब्रह्मसूत्रभाष्यव्याख्या - बोधेन्द्रसरस्वती-स्वामिनः ।

२२ पञ्चपादिकाविवरणम् - प्रकाशात्मश्रीचरणाः ।

२३ तत्वशुद्धिः - ज्ञानघनपादाः ।

२४ आचार्यप्रशस्तिः - (ब्रह्मविद्या) श्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीपादाः ।

२५ सुरेश्वरप्रशस्तिः - श्रीभाष्यस्वामिनः ।

२६ वार्तिककारो नैष्कर्म्यसिद्धिश्च - श्रीभाष्यस्वामिनः (श्रीसुरेश्वराचार्य-जीवितस्मरणप्रबन्धमालायाम्)

२७ मूकपञ्चशती - मूककविः ।

७ इतरे कथांशोपकारकाः ग्रन्थाः—

१ भारतगीतम् आर्. वी. कृष्णमाचार्यः (सहृदया) ।

२ नटेशविजयम् - वेङ्कटकृष्णदीक्षितः ।

३ स्मृतिमुक्ताफलम् - वैद्यनाथदीक्षितः ।

४ कालटयां आर्याम्बाशङ्करभगवत्पादालये शिलालेखः ।

५ श्रीमुखदर्पणम्—शिवरामसूरी ।

६ सुधन्वलेखः—विमर्शः—राजराजेश्वराश्रमश्रीचरणैः प्रकाशितः ।

७ ज्योतिर्मठीयमठाम्नाय महानुशासनम् ।

८ शृङ्गगिरिमठाम्नायः ।

| | | |
|---|---|---|
| ९ | संक्षेपशारीरकोपोद्घातः | रामनाथद्विवेदी |
| १० | न्यायरत्नदीपावली | आनन्दनुभवाचार्यः |
| ११ | सौन्दर्यलहरी व्याख्या | सौभाग्यवर्धिनी |
| १२ | ,, | अरुणामोदिनी |
| १३ | ,, | आनन्दगिरीया |
| १४ | ,, | पदार्थचन्द्रिका |
| १५ | सुरेश्वराचार्यजीवितस्मरणम् | अखिलभारतशङ्करसेवासमितिः |
| १६ | कालटी | ,, |
| १७ | ब्रह्मसिद्धिरुपोद्घातः | कुप्पुस्वामिशास्त्री |
| १८ | अद्वैतग्रन्थकोशः | इष्टसिद्धीन्द्रसरस्वातीस्वामिनामन्तेवासी |

८ भगवत्पादैर्विरचिता ग्रन्थाः

## संकलने मूलम्

प्रार्थना—एतद्ग्रन्थसंकलनं प्राचीनेभ्यः शंकरविजयादिभ्योऽधो निर्दिष्टेभ्यो ग्रन्थेभ्यः तत्र तत्रोपलभ्यमानयैवानुपूर्व्या उद्धृतैः श्लोकैः संपादितम्। क्वचित्तथाग्रहणे इतिवृत्तसंक्षेपणाय सन्दर्भौचितीनिर्वहणाय अक्षरे पदे पादेऽर्धे वा हस्तक्षेपः कृतः संकलयित्रा। मा गणयत तं दोषतया। श्री शंकरविजय-मकरन्दसारस्य आस्वादसंख्या नखचिह्नमध्ये दत्ता, श्लोकसंख्या च तदनु।

शिवरहस्यतः- (1) 67-77, (9) 40-43, (15) 58

कूर्मपुराणतः (1) 79-82

भविष्योत्तर पुराणतः (1) 83

लिंगपुराणतः (1) 84-85

वायुपुराणतः (1) 87

मार्कण्डेयसंहितातः (1) 86, (9) 3-7, (12) 24, (14) 13, 14, 22, (15) 3, 15-17, 19, 69,

बृहच्छंकरविजयतः—(2) 44-62, 68-74, (3) 38, (5) 16, 18, (6) 67, (7) 4-14, 69-98, (13) 40-42, (15) 59-60

प्रचीनशंकरविजयतः—(1) 54, (3) 39, (4) 8, (5) 122, (6) 10-11 (13) 73-74, (15) 62

ब्रह्मानन्दीयशंकरविजयतः—(5) 42-50, 63-65, (9) 25-26, 31-34, 44-59, (11) 23-24, 44-59, (12) 10-11, (13) 12-18,25-29

व्यासचलीयशंकरविजयतः—(2) 11-19, 23-27, 29-38, 75-76, 83, 85, 93, (3) 81, (4) 2, (5) 2-7, 9,40, 110, 111, (6) 23-24, 29-30, 70, 79, (7) 16-18, 24, 61-62, 111-120, (8) 7, 20, 21 25-32, 47, (10) 8-10, 15-16, 35-45, 47-61, 63-79, (15) 49, 56, 57, 64,

माधवीयतः—(1) 10, (2) 9-19, 25-27, 29-38, 75, 76, 83, 85-89, 94-95, (3) 56-63, 66-77, 91-97, (4) 2-5, 9-14, 16, 28, 30, 31, 33-35, 39-42, 54-60, (5) 2-12, 17, 19-24, 34-39, 41 51, 67, 73-76, 84-91, 97-101, 106-109, 111-114 (6) 11, 25-29, 79, (7) 24-62, 100-104, 106-10, (8) 7, 9, 18, 19, 25-32, 35-43, 46-47, 66-73, 77-91, (9) 82-85, 98, 99, 101-109, 114-126, 130, 131, 135-141, (10) 11-14, 35, 46-84, 94, (11) 33-34, (13) 45-46

आनन्दगिरीयशंकरविजयतः—(1) 9, (2) 77, (5) 115-121, (7) 26-55

चिद्विलासीयतः—(2) 45, 46, 56, 62, 68-74, 78-80, 90-92, (3) 11-17. 35-36, 40-53, (8) 10-17 (9) 19-22, 24, 63-64, (10) 93, (12) 4, 6, (13)22-24, 30-31, 33, 39, 71-72, (14) 29-32, (15) 4-6

सदानन्दीयतः—(4) 6-7, 25-27, 65, 68, 69, 73, 78

गोविन्दनाथीयतः—(2) 4-8, 21, 22, 63-67, 81, (3) 53-55, 80, 82-83, 87, 89, 90, 100-106, (4) 23, (5) 59, 66, 102-105, (7) 63-68, (8) 2-6, 8, 33-34, 44-45, (9) 129, 132-134, (10) 3-7, 34, (11) 39-42, (12) 12-14, 34-38, (13) 4-5, (15) 18

केरलीयशंकरविजयतः—(15) 50-55

पतञ्जलिचरिततः—(4) 3, 4, 9-12, 16, (7) 15

शंकराभ्युदयतः—(2) 28, 39, 82, (3) 78-79, 84-87, 89, 98-99, (4) 24, (7) 99, 109, (8) 37, 65, 67-73, (11) 13-15, 17-19, 21, 25, 26, 31, (12) 15, (13) 6-10, 43-47, 49, 53

गुरुवंशकाव्यतः—(2) 2, 3, 20, 84, 96, (4) 32, (6) 12-13, 21, 80, 81, (8) 22-24, 50-62, 74-77, (9) 8-11, 18, 23, (9) 113, (10) 2, 85-88, 95, (11) 2, (12) 2-3, (13) 3, (14) 15, 28

भगवत्पादाभ्युदयतः—(2) 40-43, (3) 2-10, (5) 13-15, 26-33, 62, 68-72, 77-83, 92-96, (6) 2-4, (12) 25-31, 33, (14) 2-12, 16-21, 33-35, (15) 1-2, 26

तोटकाष्टकतः—(10) 18-19

हस्तामलकीयतः—(9) 127-128

श्रुतिसारसमुद्धरणतः (10) 22-33

सुरेश्वरवार्तिकतः (10) 96

नैष्कर्म्यसिद्धितः (10) 99 (चन्द्रिकातः 15, 28)

पञ्चपादिकातः (10) 97-98

संक्षेपशारीरकतः (15) 29, 31, 32 (व्याख्यातः (15) 27-30)

जगद्गुरुरत्नमालास्तवतः (1) 43-53, 62-66, (3) 37, (4) 1, (5) 1, (7) 1, (8) 1, 48, (9) 1, (10) 1, (11) 1, (13) 1, 2, 75-77, (14) 1, (15) 63

पुण्यश्लोकमञ्जरीतः (15) 61

कामाक्षीविलासतः (12) 43-74

यतिसार्वभौमोपहारतः (2) 1, (3) 1, (5) 51, 61

गुर्वष्टकतः (12) 1

सिद्धान्तबिन्दुतः (10) 100

वासनादेहस्तुतितः (15) 33

भाष्यस्वामिनां सुरेश्वर प्रशस्तितः (10) 89

गोवर्धनगुरुपरे परानाममालातः (15) 9-14

ज्योतिर्मठीयमठाम्नाय महाशासनतः (15) 21-25

मठाम्नायसेतुतः (15) 22-25

शंकर पूजाकल्पतः (15) 65

भगवत्पाद प्रणीतग्रन्थेभ्यः—गीताभाष्यतः (1) 55-56, माण्डूक्यकारिकाभाष्यतः (5) 56-57, तैत्तिरीयोपनिषद्भाष्यतः (5) 58 देवीभुजंगतः (3) 31-32, कनकधारास्तोत्रतः (3) 64-65, निर्वाणपञ्चकतः (3) 108, दशश्लोकीतः (4) 15, गुरुपादुकापञ्चकतः (4) 18, विवेकचूडामणितः (4) 19 (8) 103-106, काशीपंचकतः (4) 63, मणिकर्णिकाष्टकतः (4) 64-67, गंगाष्टकतः (4) 66, द्वादशलिंगस्तोत्रतः (4) 70, (9) 61, 65, 68, 71, 73, 75, 77, 79, 81, 86, (11) 32, शिवनामावल्यष्टकतः (4) 71-72, अन्नपूर्णाष्टकतः (4) 74-75, कालभैरवाष्टकतः (4) 77, मनीषापञ्चकतः (5) 25, षट्पदीतः (6) 14-15, शिवभुजंगतः (6) 32-33, विष्णुभुजंगतः (6) 52, 53, गोविन्दाष्टकतः (6) 57, कृष्णाष्टकतः (6) 66, मातृपञ्चकतः (6) 73-75, यमुनाष्टकतः (7) 20, गंगाष्टकतः (7) 23, नरसिंहाष्टकतः (8) 64, दक्षिणामूर्तिस्तोत्रतः (8) 94, 95, 96-98, दक्षिणामूर्त्यष्टकतः (8) 100 – 101, आर्याष्टकतः (9) 14, रत्नपुष्पाञ्जलिस्तोत्रतः (9) 15-16, शिवानन्दलहरीतः (9) 27, 29, 87, 89, शिवकेशादिपादान्तस्तोत्रतः (9) 36, सुवर्णमालास्तुतितः (9) 37, सांबदशश्लोकीतः (9) 38, उमामहेश्वरस्तोत्रतः (9) 39,

भ्रमरांबाष्टकतः (9) 91, योगतारावलीतः (9) 93-96, अर्धनारीश्वरस्तोत्रतः (9) 100, त्रिपुरसुन्दरीमानसपूजास्तोत्रतः (9) 110, 111, शारदाभुजंगतः (10) 91-92, गौरीदशकतः (11) 6, सुब्रह्मण्यभुजंगतः (11) 9-11, हरिमिडेतः (11) 16, शिवभुजंगतः (11) 20, (12) 9, मीनाक्षीपञ्चरत्नतः (11) 22, श्रीरामभुजंगतः (11) 27. 29, हनुमत्पञ्चरत्नतः (11) 30, गणेश-पञ्चरत्नतः (11) 37, रंगनाथाष्टकतः (11) 43, मातृकापुष्पमालास्तोत्रतः (11) 60-62, मृत्युञ्जयमानसिक पूजास्तोत्रतः (12) 8, विष्णु पादादिकेशान्त-स्तोत्रतः (12) 21-23, एक श्लोकीतः (12) 32, शिवपंचाक्षरनक्षत्रमाला-स्तोत्रतः (12) 39, कल्याणवृष्टिस्तवतः (12) 41, शिवापराधक्षमापणस्तोत्रतः (13) 11, मन्त्रमातृकापुष्पमालास्तोत्रतः (13) 48, श्यामलानवरत्नमालातः (13) 50, 51, त्रिपुरसुन्दरीवेदपादस्तवतः (13) 54-70, लक्ष्मीनृसिंह पञ्चरत्नतः (14) 24, पाण्डुरंगाष्टकतः (14) 27, भजगोविंदतः (14) 37-41, जगन्नाथाष्टकतः (15) 8, उपदेशपञ्चकतः (15) 20, सौन्दर्यलहरीतः (15) 37-48.

(अवधेयं - व्यासाचलीये माधवीये च शंकरविजये केचन श्लोकाः समानयैवानुपूर्व्योपलभ्यन्ते । तथा माधवीये शंकराभ्युदयेच, बृहच्छंकरविजये चिद्विलासीये च ।

# श्रीशङ्करविजयमकरन्दसार विषयानुक्रमणिका

---

श्री महात्रिपुरसुन्दरीसमेत

श्री चन्द्रमौळीश्वराय नमः ।

स्वस्ति श्रीमदखिलभूमण्डलङ्कार त्रयस्त्रिंशत्कोटिदेवतासेवित श्रीकामाक्षी-देवीसनाथ श्रीमदेकाम्रनाथ श्रीमहादेवीसनाथ श्रीहस्तिगिरिनाथ साक्षात्कार परमाधिष्ठान सत्यव्रत नामांकित कांचीदिव्यक्षेत्रे ; शारदामठ सुस्थितानाम् ; अतुलितसुधारसमाधुर्य कमलासनकामिनी धम्मिल्लसम्फुल्ल मल्लिकामालिका निष्यन्द मकरन्दझरी सौवस्तिक वाङ्निगुम्भ विजृम्भणानन्द तुन्दिलित मनीषिमण्डला-नाम् ; अनवरताद्वैतविद्याविनोदरसिकानाम् ; निरन्तरालंकृतीकृत शान्ति दान्तिभूम्नाम् ; सकलभुवनचक्रप्रतिष्ठापक श्रीचक्रप्रतिष्ठाविख्यात यशोऽलंकृता-नाम् ; निखिलपाषण्डषण्डकण्टकोत्पाटनेन विशदीकृत वेदवेदान्तमार्गषणमत-प्रतिष्ठापकाचार्याणाम् , श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीजगद्गुरु श्रीमच्छंकर-भगवत्पादाचार्याणाम् अधिष्ठाने सिम्हासनाभिषिक्त श्रीमन्महादेवेन्द्रसरस्वती संयमीन्द्राणाम् अन्तेवासिवर्य श्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीपादानाम् तदन्तेवासि-वर्य श्रीमज्जयेन्द्रसरस्वती संयमीन्द्राणाम् च चरणनळिनयोः साञ्जलिबन्धं नमस्कुर्मः ॥

## ॥ श्री तोटकाष्टकम् ॥

विदिताखिलशास्त्रसुधाजलधे
　　महितोपनिषत्कथितार्थनिधे ।
हृदये कलये विमलं चरणं
　　भव शङ्कर देशिक मे शरणम् ॥ (१)

करुणावरुणालय पालय मां
　　भवसागरदुःखविदूनहृदम् ।
रचयाखिलदर्शनतत्वविदं
　　भव शङ्कर देशिक मे शरणम् ॥ (२)

भवता जनता सुहिता भविता
　　निजबोधविचारण चारुमते ।
कलयेश्वरजीवविवेकविदं
　　भव शङ्कर देशिक मे शरणम् ॥ (३)

भव एव भवानिति मे नितरां
　　समजायत चेतसि कौतुकिता ।
मम वारय मोहमहाजलधिं
　　भव शङ्कर देशिक मे शरणम् ॥ (४)

सुकृतेऽधिकृते बहुधा भवतो
भविता समदर्शनलालसता ।
अतिदीनमिमं परिपालय मां
भव शङ्कर देशिक मे शरणम् ॥ (५)

जगतीमवितुं कलिताकृतयो
विचरन्ति महामहसश्छलतः ।
अहिमांशुरिवात्र विभासि गुरो
भव शङ्कर देशिक मे शरणम् ॥ (६)

गुरुपुङ्गव पुङ्गवकेतन ते
समतामयतां नहि कोऽपि सुधीः ।
शरणागतवत्सल तत्त्वनिधे
भव शङ्कर देशिक मे शरणम् ॥ (७)

विदिता न मया विशदैककला
नच किंचन कांचनमस्ति गुरो ।
द्रुतमेव विधेहि कृपां सहजां
भव शङ्कर देशिक मे शरणम् ॥ (८)

॥ श्रीगुरुभ्यो नमः ॥

॥ श्रीमहागणपतये नमः ॥

# श्रीशङ्करविजयमकरन्दसारः

## ॥ प्रथम आस्वादः ॥

### मङ्गलाचरणम्

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥ १ ॥

दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् ।
वामकुचनिहितवीणां वरदां सङ्गीतमातरं वन्दे ॥ २ ॥

दयिन्या श्रीमात्रा दहरकुहरे सूत्रधरया
समादिष्टा वाचामधिपतिषु काप्यन्यतमिका ।
मदाराध्यश्रीमद्गुरुचरणनिर्णेजनजलैः
पवित्रे जिह्वाग्रे नटति मम देवी करुणया ॥ ३ ॥

वन्दे चन्द्रमसं चन्द्रशेखरं तमुमापतिम् ।
इन्द्रं सरस्वतीं चन्द्रशेखरेन्द्रसरस्वतीम् ॥ ४ ॥

श्रीकामकोटिपीठेशं श्रीजयेन्द्रसरस्वतीम् ।
तन्मूर्त्या दर्शितक्षेमं भगवत्पादशङ्करम् ॥ ५ ॥

दयमानदीर्घनयना देशिकताभव्यदृश्यदक्षकरा ।
वामकरनिहितदण्डा गुरुमूर्तिर्मुग्धमधुरवदनाऽव्यात् ॥ ६ ॥

दण्डालग्नकराम्बुजं पदयुगश्लिष्यद्वटीपादुकं
श्रीर्षारोपितभक्तदत्ततुलसीविल्वादिमालभरम् ।
मार्गाभ्यागतसज्जनाकलितसाष्टाङ्गप्रणामोन्मिषत्-
कारुण्यं हृदि भावये गुरुवरं श्रीकामकोटीश्वरम् ॥ ७ ॥

## श्रीगुरुपरंपराध्यानम्

सदाशिवसमारंभां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥ ८ ॥

नारायणं पद्मभुवं वसिष्ठं शक्तिञ्च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥
श्रीशङ्कराचार्यमथास्य पद्मपाद च हस्तामलकं च शिष्यम् ।
तं तोटकं वार्तिककारमन्यानस्मद्गुरून् सन्ततमानतोऽस्मि ॥ ९ ॥

अज्ञानान्तर्गहनपतितानात्मविद्योपदेशैः
त्रातुं लोकान् भवदवशिखातापपापच्यमानान् ।
त्यक्त्वा मौनं वटविटपिनो मूलतो निस्सरन्ती
शम्भोर्मूर्तिश्चरति भुवने शङ्कराचार्यरूपा ॥ १० ॥

चरतेर्लट्प्रयोगोऽयं भासते सार्थको, यतः ।
शङ्करस्थापितानेकपीठाधिपतयः समे ॥ ११ ॥

प्रथन्ते शङ्कराचार्याः भिन्नदीक्षाभिधा अपि ।
तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मकाः ॥ १२ ॥

तद्गुणानेव गायन्तः तदभेदं विवृण्वते ।
एतेषां शङ्कराद्भेदं कञ्चिन्नोपलभामहे ॥ १३ ॥

श्रीशङ्करादविच्छिन्नसंप्रदायप्रवर्तकान् ।
प्रणुमस्तान्परिव्राजः परहंसान् गुरूत्तमान् ॥ १४ ॥

शङ्करसर्वज्ञादीन् प्रणुमः श्रीकामकोटिपीठेशान् ।
एकोनसप्ततिगुरून् इष्टाप्त्यै श्रीजयेन्द्रान्तान् ॥ १५ ॥

## उपोद्घातः

श्रीमत्समस्तसंपत्समृद्धिसंपूर्णरम्यतोत्कर्षम् ।
कञ्चन कलये कालं सार्धद्विसहस्रवत्सरेभ्यः प्राक् ॥ १६ ॥

यस्मिन्भारतवर्षं समभूत् ध्यानवद्यविद्योति ।
नानाकलाकलापप्रसारविस्तारिकीर्तिकमनीयम् ॥ १७ ॥

अस्मिन् भारतवर्षे विषयविदूरा महात्मानः ।
भगवद्ध्यानैकपराः तपसा त्यागेन लेभिरे स्वपदम् ॥ १८ ॥

शङ्करभगवत्पादाः परमाचार्या अवातरन्नत्र ।
ये किल सोपानततिं निरमासत मुक्तिसौधमधिरोढुम् ॥ १९ ॥

यद्ग्रथितसूक्तिमाला सुदृशां प्रतिदेशमुल्लसति कण्ठे ।
तेषां चरितं बहुभिर्ग्रथितं विस्तीर्णमत्र सङ्कलये ॥ २० ॥

अंशे शिवरहस्यस्य नवमे सूचितं तथा ।
मार्कण्डेय्यां संहितायां नातिविस्तरतो मनाक् ॥ २१ ॥

चरितं गुरुनाथस्य बहवः समवर्णयन् ।
बाल्ये सखा शङ्करस्य पश्चात्तच्छिष्यतां गतः ॥ २२ ॥

तत्र चित्सुखयोगीन्द्रः प्रथमस्मृतिमर्हति ।
अनन्तानन्दगिर्याख्यः शाङ्करं विजयं व्यधात् ॥ २३ ॥

यस्याप्रतिहताज्ञः स शङ्करः परमो गुरुः ।
ब्रह्मानन्दो गाणपतः सर्वज्ञात्ममुनीशितुः ॥ २४ ॥

अधीतशङ्करकथः चकार चरितं महत् ।
श्रीकामकोटिपीठेशो महादेवो गुरूत्तमः ॥ २५ ॥

सदा व्यासाचलस्थित्या लब्धव्यासाचलाभिधः ।
तेने श्रीभगवत्पादचरितं हृद्यवाङ्मयम् ॥ २६ ॥

संक्षिप्तमतनोत्तव्यक्कालिदासाभिधः सुधीः ।
माधवो यं परे प्राहुर्विद्यारण्यं विपश्चितः ॥ २७ ॥

स्वग्रन्थे माधवः स्तौति प्राच्यं व्यासाचलेश्वरम् ।
धन्यो व्यासाचलो धन्यास्तत्कृतिज्ञा इति स्फुटम् ॥ २८ ॥

कविर्गोविन्दनाथोऽपि केरलीयो व्यधात्कृतिम् ।
व्यासाचलेशं यः स्तौति शाङ्करे चरिते स्वके ॥ २९ ॥

" सर्वागमास्पदं वन्दे व्यासाचलमिमं कविम् ।
बभूव शङ्कराचार्यकीर्तिकल्लोलिनी यतः ॥ ३० ॥

अत्युन्नतस्य काव्याद्रेः व्यासाचलभुवोऽखिलम् ।
अर्थप्रसूनमादातुं न समर्थ " इति स्फुटम् ॥ ३१ ॥

सदाशिवब्रह्मयोगी गुरूणां रत्नमालिकाम् ।
विश्वाधिकात्मबोधेन्द्रादेशात् चक्रे मनोहराम् ॥ ३२ ॥

आत्मबोधयतीन्द्रस्तद्व्याख्याने सुषमाभिधे ।
शाङ्करं चरितं कृत्स्नं सञ्जग्राह ततस्ततः ॥ ३३ ॥

सारस्वतः सदानन्दः चिद्विलासो यतीश्वरः ।
पातञ्जलेऽथ विजये रामभद्रमखीश्वरः ॥ ३४ ॥

रत्नखेटश्रीनिवाससुतश्चूडामणिर्मखी ।
विद्वद्वालो लक्ष्मणाख्यः सच्चिदानन्दसंश्रयः ॥ ३५ ॥

एते चान्ये च बहवोऽवर्णयन् शांकरीं कथाम् ।
कथेयं विस्तृताऽंशेन भिद्यते तत्र तत्र ह ॥ ३६ ॥

सार्धे वर्षसहस्रे द्वे गते, श्रद्दधिरे यथा ।
प्राक्तनास्तत्सूक्तिगुप्तौ न तथा वृत्तसंग्रहे ॥ ३७ ॥

व्याख्याक्रमोपपन्नत्वात् भक्तिज्ञानोपकृत्त्वतः ।
सूक्तयो रक्षिताः सम्यक् विनैवाक्षरलोपनम् ॥ ३८ ॥

सत्यालङ्करणं वासोभूषणाभं कथानकम् ।
भिद्यते रुचिवैचित्र्यात् सत्यं तेन न भिद्यते ॥ ३९ ॥

विभिन्नं तत्कथावस्तु चात्र सङ्कल्प्यते मया ।
विश्रामकेऽपि चरितक्रमवस्तुनिरूपणे ॥ ४० ॥

अविभ्रमं श्रये मार्गं गुरुवर्यैः प्रदर्शितम् ।
सदाशिवात्मबोधाद्यैर्गतं दीप्तं तदुक्तिभिः ॥ ४१ ॥

कलये भगवत्पादान् कलितैः प्राच्यवाक्सुमैः ।
क्लृप्तैर्यथामतिरुचि ग्रथितैः स्वोक्तितन्तुषु ॥ ४२ ॥

## पूर्वाचार्यकथासंग्रहः ।

यद्बोधवशादहं ममेदं तदिहेत्यादिरुदेति भूरिभेदः ।
तदखण्डमनन्तमद्वितीयं परमानन्दमयं पदं श्रयेयम् ॥ ४३ ॥

वटपादपमूलपट्टभद्रं स्फुटचिन्मुद्रमुदूढमौनमुद्रम् ।
कलितेन्दुकलं कृपासमुद्रं कलये कञ्चन देशिकं विनिद्रम् ॥ ४४ ॥

कमलाकुचकुम्भकुङ्कुमश्रीकलितोरःस्थलमप्यरागयोगम् ।
करवै मुरवैरिणं महान्तं करुणार्द्रं हृदये कविं पुराणम् ॥ ४५ ॥

गरुडाङ्कगभीरनाभिपद्मोदरभूगह्वरनिष्ठनैष्ठिकाग्रयम् ।
चतुराननमाश्रयामि कामं चतुराम्नायवदावदं सदापि ॥ ४६ ॥

कुशिकप्रभवास्त्रशस्त्रपालीप्रशमाचार्यकसिद्धहस्तदण्डम् ।
शमवन्तमरुन्धतीसहायं शरणं यामि वसिष्ठमप्रमेयम् ॥ ४७ ॥

बहुमित्रसहक्षितीशपापापहसान्निध्यमरोध्यसत्प्रतापम् ।
महदध्वितमन्त्रयन्त्रशक्तिं मनसा शक्तिमुपैमि सद्विरक्तिम् ॥ ४८ ॥

पवनाकुलकाशलेशकल्पं प्रभवादेव पराहताशराशम् ।
प्रणमामि पराशरं मुनीशं प्रचरद्वैष्णवसंहिताप्रकाशम् ॥ ४९ ॥

निगमानपि योऽन्वशाच्चतुर्धा व्यधिताष्टादशधापि यः पुराणम् ।
स च सात्यवतेय ईप्सितं मे सकलाम्नायशिरोगुरुर्विधत्ताम् ॥ ५० ॥

जननीजठरादिव च्यवन् यो जगतो नाद्रवदात्मविद् विपद्भयः ।
अनहन्तमहं तमात्मवन्तं भगवन्तं शुकमाश्रये प्रशान्तम् ॥ ५१ ॥

अभियुञ्जदयार्च्यपूज्यपादान् अपह्नुन्यादिनिषाकसिद्धनेतॄन् ।
अथ गौडपदान् फणीशभाष्यप्रथमाचार्यकपण्डितान् प्रपद्ये ॥ ५२ ॥

हरितल्पहरांघ्रिनूपुरक्ष्माधरसौमित्रिबलात्रिपुत्रलक्ष्मा ।
जयतादुपरेवमात्तधामा जयगोविन्दमुनिः स चन्द्रनामा ॥ ५३ ॥

सततं निगदन् रसेन योऽसौ जय गोविन्द जयेति सूक्तिमेकाम् ।
श्रितमौनममूद्यदन्यवादे जयगोविन्दमुनिं तदाहुरेनम् ॥ ५४ ॥

" नारायणः परोऽव्यक्तात् अण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ ५५ ॥

स भगवान् सृष्ट्वेदं जगत्, तस्य च स्थितिं चिकीर्षुः, मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन्, प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम्। ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास। द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च जगतः स्थितिकारणम्। प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिः आश्रमिभिश्च श्रेयोऽर्थिभिः अनुष्ठीयमानो दीर्घेण कालेन। अनुष्ठातॄणां कामोद्भवात् हीयमानविवेकविज्ञानहेतुकेन अधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे, जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुः, भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव। ब्राह्मणत्वस्य हि रक्षणे रक्षितः स्याद् वैदिको धर्मः, तदधीनत्वाद्वर्णाश्रमभेदानाम्। स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नः त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्य, अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्, स्वमायया देहवानिव, जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते" ॥ ५६ ॥

इति शङ्करोऽत्र गीताभाष्यारंभेऽवतारिकां तेने।
भगवज्जनिरिह भूमौ धर्मस्थित्यर्थिका कृपात इति ॥ ५७ ॥

धर्मग्लानिमधर्मोत्थानं चालोक्य भगवतो जन्म।
ज्ञानबलादिकभगवच्छक्त्यंशाविष्कृताऽवतारेण ॥ ५८ ॥

आसुरमथवा क्षात्रं कुरुते बलमुद्धतं यदा ग्लानिम्।
धर्मस्य, तदा बलवान् वीरश्चाजायते भगवान् ॥ ५९ ॥

ज्ञानलवदुर्विदग्धा अज्ञानां बुद्धिमोहकाः पटवः।
मतिभेदजननदक्षा ज्ञानाचार्या यदा जाताः ॥ ६० ॥

वैदिकधर्मग्लानिस्तदा भवेद्बुद्धिविप्लवतः।
अपनयति मोहमीशो देशिकताभव्यनिजमूर्त्या ॥ ६१ ॥

कलिना बलिनाऽखिले खिलेऽपि स्खलिते श्रौतपथेऽपथे प्रवृद्धे ।
जपहोमतपस्सु नामशेषेष्वपि यातेषु सुभाषितेषु शोषम् ॥ ६२ ॥

जिनबुद्धकपालिशक्तिवह्नीन्द्विनसेवासु समन्ततः श्रितासु ।
शिथिले द्विजवेदवेदिवादे प्रथिते चाद्वयवेदबाह्यमोदे ॥ ६३ ॥

जगदीक्षणविह्वलामृतान्धोनिगदव्यक्तकृपारसानुबन्धम् ।
प्रणिदिश्य गुहं पुरैव गन्तुं प्रणिबन्धुं च मखान् द्विषश्च यन्तुम् ॥ ६४ ॥

अवतार्य सुरान् परांश्च पूर्वं विधिविष्णिवन्द्रमुखान् विनोदपूर्वम् ।
स्वयमप्यवतीर्य सुत्युरार्याकमितुः श्रीशिवशर्मणो विचार्य ॥ ६५ ॥

उदभूत्सदने निटालदृग्यो मदभाजां सुधियां प्रमाथयोग्ये ।
शिशुरर्पयतान्मुमुक्षुभाग्यं स शुभं शंकरदेशिकः सुभोग्यम् ॥ ६६ ॥

कदाचिच्छिवया पृष्टस्त्रिकालज्ञस्त्रिलोचनः ।
भविष्यच्छङ्करोत्पत्तिमवदत्संग्रहेण ह ।
शैवे रहस्ये गदितं स्मरामोऽत्र सुसंगतम् ॥ ६७ ॥

'पापैककर्मनिरतान्विरतान् सर्वकर्मसु ।
वर्णाश्रमपरिभ्रष्टान् वर्णप्रस्त्रवणान् जनान् ॥ ६८ ॥

कल्यब्धौ मज्जमानांस्तान् दृष्ट्वाऽनुक्रोशतोऽम्बिके ।
मदंशजातं देवेशि कलावपि तपोधनम् ॥ ६९ ॥

केरलेषु तदा विप्रं जनयामि महेश्वरि ।
तस्यैव चरितं तेऽद्य वक्ष्यामि शृणु शैलजे ॥ ७० ॥

कल्यादिमे महादेवि सहस्रद्वितयात्परम् ।
सारस्वतास्तथा गौडा मिश्राः कर्णाजिना द्विजाः ॥ ७१ ॥

आममीनाशना देवि ह्यार्यावर्तानुवासिनः ।
औत्तरा विन्ध्यनिलया भविष्यन्ति महीतले ॥ ७२ ॥

शब्दार्थज्ञानकुशलाः तर्ककर्कशबुद्धयः ।
जैना बौद्धा बुद्धियुक्ता मीमांसानिरताः कलौ ॥ ७३ ॥

वेदबोधितवाक्यानां अन्यथैव प्ररोचकाः ।
प्रत्यक्षवादकुशलाः शल्यभूताः कलौ युगे ॥ ७४ ॥

मिश्राः शास्त्रमहाशस्त्रैः अद्वैतोच्छेदिनोऽम्बिके ।
कर्मैव परमं श्रेयो नैवेशः फलदायकः ॥ ७५ ॥

इति युक्तिपरामृष्टवाक्यैरुद्बोधयन्ति च ।
तेन घोराः कुलाचाराः कर्मसारा भवन्ति च ॥ ७६ ॥

तेषामुत्पाटनार्थाय सृजामीशे मदंशतः ।
केरले शशलग्रामे विप्रपत्न्यां मदंशतः ।
भविष्यति महादेवि शङ्कराख्यो द्विजोत्तमः' ॥ ७७ ॥

कौर्मे भविष्योत्तरे च लैङ्गमार्कण्डयोस्तथा ।
वायौ पुराणेऽवतारो निर्दिष्टः शाङ्करः स्फुटम् ॥ ७८ ॥

'कलौ रुद्रो महादेवो लोकानामीश्वरः परः ।
स देवता भवेन्नणां देवतानां च दैवतम् ॥ ७९ ॥

करिष्यत्यवतारं स्वं शङ्करो नीललोहितः ।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ ८० ॥

उपदेक्ष्यति तद् ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ।
सर्ववेदान्तसारं हि सर्वस्माच्च तु दर्शनात् ॥ ८१ ॥

ये तं विप्रा निषेवन्ते येन केनाप्युपायतः ।
विजित्य कर्मजान् दोषान् यान्ति ते परमं पदम्' ॥ ८२ ॥

'कल्यब्दे द्विसहस्रान्ते लोकानुग्रहकाम्यया ।
चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति' ॥ ८३ ॥

'निन्दन्ति वेदविद्यां च द्विजाः कर्माणि वै कलौ ।
कलौ रुद्रो महादेवः शङ्करो नीललोहितः ॥ ८४ ॥

प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः ।
ये तं विप्रा निषेवन्ते येन केनापि शङ्करम् ।
कलिदोषान्विनिर्जित्य प्रयान्ति परमं पदम्' ॥ ८५ ॥

'लोकानुग्रहतत्परः परशिवः संप्रार्थितो ब्रह्मणा
　　चार्वाकादिमतप्रभेदनिपुणां बुद्धिं सदा धारयन् ।
कालट्याख्यपुरोत्तमे शिवगुरुर्विद्याधिनाथश्च यः
　　तत्पत्न्यां शिवतारके समुदितः श्रीशङ्कराख्यां वहन्' ॥ ८६ ॥

'चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति' ॥ ८७ ॥

शैवादौ सूचितं भावि वृत्तं सत्यापयन्निह ।
अवातरद्यत्कालट्यां चरितं तन्निबोधत ॥ ८८ ॥

॥ इति श्रीशङ्करविजयमकरन्दसारे प्रथम आस्वादः समाप्तः ॥

## ॥ द्वितीय आस्वादः ॥

### शिवगुरुतपश्चर्या ।

महिमाननीयचरितं दधतं महिमानमीड्यमहिमाल्यभृतः ।
अवतारभूतमवतान्नुवतां भवतारणं किमपि वस्तु मुहुः ॥ १ ॥

स्वर्णाद्रेः ककुभि विभाति दक्षिणस्यां देशः कोऽप्यथ भुवि केरलाभिधानः ।
पूर्णश्रीर्जितदिविषत्पुरैः पुराग्र्यैः विप्रौघैः श्रुतिविदितोरुसच्चरित्रैः ॥ २ ॥

यस्याख्यामवगमयन्ति निश्चितार्थां संपूर्णाः सुरुचिरकेरभूरुहौघाः ।
तत्रत्या हृदि सरसा बहिः सुरूपा लोका इत्यवगमयत्फलालिभाराः ॥ ३ ॥

निला मरुद्वृधा चेति तत्र नद्यौ विराजतः ।
निलायां शम्बरक्रोडं भासते शास्तुरास्पदम् ॥ ४ ॥

नावाक्षेत्रं हि तस्या हि तीरे दीप्यति मुक्तिदम् ।
भवनं पद्मनाभस्य भुवनत्रयपावनम् ॥ ५ ॥

चूर्णीति चापरा ख्याता तीरयोरुभयोर्नदी ।
अतिस्वच्छजला धत्ते पुण्यान् बहुसुरालयान् ॥ ६ ॥

ऋद्धिमानुत्तरे तीरे तस्याः पावनपाथसः ।
कश्चिद्देशो महानस्ति कालटीति सुविश्रुतः ॥ ७ ॥

सर्ववेदार्थनिपुणैः सर्वशास्त्रविशारदैः ।
सर्वाश्रमरतैः शान्तैरन्वितो विप्रसत्तमैः ॥ ८ ॥

कश्चिद्विपश्चिदिह निश्चलधीर्विरेजे विद्याधिराज इति विश्रुतनामधेयः ।
रुद्रो वृषाद्रिनिलयोऽवतरीतुकामो यत्पुत्रमात्मपितरं समरोचयत्सः ॥ ९ ॥

पुत्रोऽभवत्तस्य पुरात्तपुण्यैः सुब्रह्मतेजाः शिवगुर्वभिख्यः ।
ज्ञाने शिवो यो वचने गुरुस्तस्यान्वर्थनामाकृत लब्धवर्णः ॥ १० ॥

स ब्रह्मचारी गुरुगेहवासी तत्कार्यकारी विहितान्नभोजी ।
सायं प्रभातश्च हुताशसेवी व्रतेन वेदं निजमध्यगीष्ट ॥ ११ ॥

वेदेष्वधीतेषु विचारितेऽर्थे शिष्यानुरागी गुरुराह तं स्म ।
अपाठि मत्तः सषडङ्गवेदो व्यचारि कालो बहुरत्यगात्ते ॥ १२ ॥

अर्थावबोधनफलो हि विचार एष तच्चापि चित्रबहुकर्मविधानहेतोः ।
तत्राधिकारमधिगच्छति सद्वितीयः कृत्वा विवाहमिति वेदविदां प्रवादः ॥ १३ ॥

एवं गुरौ वदति तज्जनको निनीषुः आगच्छदत्र तनयं स्वगृहं गृहेशः ।
तेनानुनीय बहुलं गुरवे प्रदाय्य वित्तं निकेतनमनायि गृहीतविद्यः ॥ १४ ॥

वेदे च शास्त्रे च निरीक्ष्य बुद्धिं प्रश्नोत्तरादावपि नैपुणीं ताम् ।
दृष्ट्वा तुतोषातितरां पिताऽस्य स्वतस्सुखा या किमु शास्त्रतो वाक् ॥ १५ ॥

कन्यां प्रदातुमनसो बहवोऽपि विप्रास्तन्मन्दिरं प्रति ययुर्गुणपाशकृष्टाः ।
पूर्वं विवाहसमयादपि तस्य गेहं सम्बाधवत्किल बभूव वरीतुकामैः ॥ १६ ॥

बह्वर्थदायिषु बहुष्वपि सत्सु देशे कन्याप्रदातृषु परीक्ष्य विशिष्टजन्म ।
कन्यामयाचत सुताय स विप्रवर्यो विप्रं विशिष्टकुलजं मखपण्डिताख्यम् ॥ १७ ॥

विद्याधिराजमखपण्डितनामधेयौ सम्प्रत्ययं व्यतनुतामभिपूज्य दैवम् ।
उद्वाह्य शास्त्रविधिना विहिते मुहूर्ते तौ संमुदं बहुमवापतुरासकामौ ॥ १८ ॥

अग्नीनथाधित महोत्तरयागजातं कर्तुं विशेषकुशलैः सहितो द्विजेशः ।
तत्तत्फलेषु यदनाहितहव्यवाहः स्यादुत्तरेषु विहितेष्वपि नाधिकारी ॥ १९ ॥

मुक्तोऽयं व्रतकरणादृणादृषीणां देवानामपि विहितैः समग्रयज्ञैः ।
निर्मुक्तो न चिरमभूदृणात्पितॄणां सा चिन्ता मनसि सदास्य सन्निविष्टा ॥ २० ॥

लोका न सन्त्यपुत्रस्येत्यतिमात्रमनारतम् ।
सन्तापसहितं विप्रं भार्योवाच विचार्य तम् ॥ २१ ॥

सर्वभक्तजनाकांक्षापूरणामरपादपः ।
निषेव्यः क्षिप्रमावाभ्यां अपत्यार्थमुमापतिः ॥ २२ ॥

तस्मात् फलप्रदमपीश्वरमीश्वराणां ईशं भजाव कमितः सकलार्थसिद्ध्यै ।
तत्रोदमन्युमहिमा परमं प्रमाणं नो देवतासु जडिमा जडिमा मनुष्ये ॥ २३ ॥

एवं कलत्रवचनं स निशम्य भक्त्या संपूजनाय गिरिशस्य मनो दधार ।
सा तस्य दुश्चरतपश्चरणोद्यतस्य तत्रानुकूल्यमकरोद्गृहवाटिकायाम् ॥ २४ ॥

तस्योपधाम किल सन्निहिताऽऽपगैका स्नात्वा सदाशिवमुपास्त जले स तस्याः ।
कन्दाशनः कतिचिदेव दिनानि पूर्वं पश्चात्तदाऽऽस शिवपादयुगब्जभृङ्गः ॥ २५ ॥

जायाऽपि तस्य विमला नियमोपतापैः चिक्लेश कायमनिशं शिवमर्चयन्ती ।
क्षेत्रे वृषस्य निवसन्तमलं सुतार्थं कालोऽप्यगादति तयोस्तपतोरनेकः ॥ २६ ॥

देवः कृपापरवशो द्विजवेषधारी प्रत्यक्षतः शिवगुरुं गत आत्तनिद्रम् ।
प्रोवाच भोः किमभिवाञ्छसि किं तपस्ते पुत्रार्थितेति वचनं स जगाद विप्रः ॥२७॥

वरयस्व बहून्पुत्रान् वत्स मूढांश्चिरायुषः ।
सर्वज्ञमेकमथवा सौम्य संकुचितायुषम् ॥ २८ ॥

पुत्रोऽस्तु मे बहुगुणः प्रथितानुभावः सर्वज्ञतापदमितीरित आबभाषे ।
दयामुदीरितपदं तनयं तपो मा पूर्णो भविष्यसि गृहं द्विज गच्छ दारैः ॥ २९ ॥

आकर्णयन्निति बुबोध स विप्रवर्यः तच्चाब्रवीन्निजकलत्रमनिन्दितात्मा ।
स्वप्नं शशंस वनितामणिरस्य भार्या सत्यं भविष्यति तु नौ तनयो महात्मा ॥३०॥

तौ दम्पती शिवपरौ नियतौ स्मरन्तौ स्वप्नेक्षितं गृहगतौ बहुदक्षिणान्नैः ।
सन्तर्प्य विप्रनिकरं तदुदीरिताभिः आशीर्भिरापतुरनल्पमुदं विशुद्धौ ॥ ३१ ॥

## शङ्करगर्भवासः ।

तस्मिन्दिने शिवगुरोरुपभोक्ष्यमाणे भक्ते प्रविष्टमभवत्किल शैवतेजः ।
भुक्तान्नविप्रवचनादुपयुक्तशेषं सोऽभुक्त साऽपि निजभर्तृपदाब्जभृङ्गी ॥ ३२ ॥

गर्भं दधार शिवगर्भमसौ मृगाक्षी गर्भोऽप्यवर्धत शनैरभवच्छरीरम् ।
तेजोविशेषविनिपातितदृष्टिपातं बिम्बं रवेर्दिवसमध्य इवोग्रतेजः ॥ ३३ ॥

गर्भालसा गतवती गतिमान्द्यमीषद् आपेति नाद्भुतमिदं धरते शिवं या ।
यो विष्टपानि बिभृते हि चतुर्दशापि यस्यैव मूर्तय इमा वसुधाजलाद्याः ॥ ३४ ॥

तां बन्धुताऽगमदुपश्रुतदोहदार्तिः आदाय दुर्लभमनर्घ्यमपूर्ववस्तु ।
आस्वाद्य बन्धुजनदत्तमसौ जहर्ष हा हन्त गर्भधरणं किल दुःखहेतुः ॥ ३५ ॥

मानुष्यधर्ममनुसृत्य किलेदमुक्तं काऽपि व्यथा शिवमहोभरणे न वध्वाः ।
सर्वव्यथाव्यतिकरं परिहर्तुकामाः देवं भजन्त इति तत्त्वविदां प्रवादः ॥ ३६ ॥

उक्ष्णा निसर्गधवलेन महीयसा सा चात्मानमैक्षत समूढमुपात्तनिद्रा ।
संगीयमानमपि गीतविशारदाद्यैः विद्याधरप्रभृतिभिर्विनयोपयातैः ॥ ३७ ॥

आकर्णयज्जय जयेति वरं दधाना रक्षेति शब्दमवलोकय मा दृशेति ।
आकर्ण्य नोत्थितवती पुनरुक्तशब्दं सा विस्मिता किल शृणोति निरीक्षमाणा ॥३८॥

खिद्यमानापि नर्मोक्तौ किञ्च मञ्चाधिरोहणे ।
विजित्यान्यानसावैच्छत् विद्यासिंहासने स्थितिम् ॥ ३९ ॥

सा ददर्श मुहुः स्वप्ने वटमूलनिवासिनम् ।
शुद्धस्फटिकसंकाशं त्रिनेत्रं चन्द्रशेखरम् ॥ ४० ॥

चिन्मुद्रालक्षणं देवं युवानं स्मरसुन्दरम् ।
दधानं मौक्तिकीमक्षमालां शिष्यैः समावृतम् ॥ ४१ ॥

ततः प्रबुद्धा सा देवी तमेव स्वप्नगोचरम् ।
ध्यायन्ती मनसा देवं तन्मयीं धारणां दधौ ॥ ४२ ॥

अथ चानेहसाऽल्पेन यत्किञ्चित्सचराचरम् ।
अचष्ट तच्छिवाकारं योगारूढेन चेतसा ॥ ४३ ॥

सा दधार सती गर्भं आदित्यसमतेजसम् ।
निधानगर्भा धात्रीव शमीवान्तर्हितानला ॥ ४४ ॥

व्यराजत तदार्याम्बा शिवैकायत्तचेतना ।
दृष्ट्वा शिवगुरुर्यज्वा भार्यामार्यां च गर्भिणीम् ॥ ४५ ॥

वृषाचलेशं सततं स्मरन्नेकाग्रचेतसा ।
दयालुतां स्तुवन् शंभोः दीनेष्वपि महत्स्वपि ॥ ४६ ॥

ववृधे स पयोराशिः पूर्णेन्दोरिव दर्शनात् ।
व्यजायत शुभः कालः पञ्चोच्चग्रहसंयुतः ॥ ४७ ॥

कल्हारकलिकागन्धबन्धुरो मरुदाववौ ।
दिशः प्रकाशिताकाशा बभूवुः सूर्यरश्मिभिः ॥ ४८ ॥

प्रातः प्रदक्षिणज्वाला जज्वलुर्यज्ञपावकाः ।
ननन्दुर्बान्धवाः सर्वे ननृतुश्चाप्सरोगणाः ॥ ४९ ॥

ससृजुः पुष्पवर्षाणि देवा भुव्यन्तरिक्षगाः ।
आसीत्तदा दिव्यगानं स्वर्गलोके चिरं सुखम् ॥ ५० ॥

प्रसन्नमभवच्चित्तं सतां प्रतपतामपि ।
ततः सा दशमे मासि संपूर्णशुभलक्षणे ॥ ५१ ॥

षड्विंशे शतके श्रीमद्यौधिष्ठिरशकस्य वै ।
एकत्रिंशेऽथ वर्षे तु हायने नन्दने शुभे ॥ ५२ ॥

मेषराशिं गते सूर्ये वैशाखे मासि शोभने ।
शुक्लपक्षे च पञ्चम्यां तिथ्यां भास्करवासरे ॥ ५३ ॥

पुनर्वसुगते चन्द्रे लग्ने कर्कटकाह्वये ।
मध्याह्ने चाभिजिन्नाममुहूर्ते शुभवीक्षिते ॥ ५४ ॥

स्वोच्चस्थे केन्द्रसंस्थे च गुरौ मन्दे कुजे रवौ ।
निजतुंगगते शुक्रे रविणा संगते बुधे ॥ ५५ ॥

प्रासूत तनयं साध्वी गिरिजेव षडाननम् ।
उदयाचलवेलेव भानुमन्तं महौजसम् ॥ ५६ ॥

दुर्निरीक्ष्यैः स्वतेजोभिः भासयन्तं दिशो दश ।
बालत्वेऽपि विशालाक्षं अतिविस्तृतवक्षसम् ॥ ५७ ॥

आजानुलंबितभुजं सुविशालनिटालकम् ।
आरक्तोपान्तनयनविनिन्दितसरोरुहम् ॥ ५८ ॥

मुखकान्तिपराभूतराकाहिमकराकृतिम् ।
शङ्खचक्रध्वजाकाररेखाचिह्नपदाम्बुजम् ॥ ५९ ॥

द्वात्रिंशल्लक्षणोपेतं विद्युदाभकलेवरम् ।
प्रमोदं दृष्टमात्रेण दिशन्तं तं स्तनन्धयम् ॥ ६० ॥

पायं पायं दृशा प्रेम्णा श्रीकृष्णमिव देवकी ।
प्रपेदे न क्षणं तृप्तिं चकोरीव सुधाकरम् ॥ ६१ ॥

तादृशं बालकं दृष्ट्वा सा बभूवातिविस्मिता ।
स चाद्भुतः किशोरोऽपि किञ्चिद्विचलिताधरः ।
ताडयन् चरणौ हस्तौ रुरोद मधुरस्वनम् ॥ ६२ ॥

प्रादुर्भावे कुमारस्य लग्नमासीत्सुशोभनम् ।
बलयुक्तशुभज्योतिस्समारूढसमीक्षितम् ॥ ६३ ॥

येन सर्वज्ञतामेति जातवान् भुवि मानुषः ।
स च योगोऽप्यभूत्तस्य द्विजपुत्रस्य संभवे ॥ ६४ ॥

मृगेन्द्रगजसर्पाखुतरक्षुहरिणादयः ।
हित्वाऽन्योन्यं तदा वैरं जन्तवो व्यहरन्वने ॥ ६५ ॥

पुष्पाणि पुष्पिता वृक्षा मुमुचुश्च तथा लताः ।
सुप्रसन्नजला नद्यो निष्कम्पास्सिन्धवोऽभवन् ॥ ६६ ॥

द्वैतवादिकराग्रेभ्यः पुस्तकानि तदाऽपतन् ।
अद्वैतवादिनां चेतो हृष्टं व्यासस्य चाभवत् ॥ ६७ ॥

तत्रत्या वृद्धनार्योऽपि यथोचितमथाचरन् ।
बालकं मेनिरे प्रोद्यदिन्दुबिम्बमिवोज्ज्वलम् ॥ ६८ ॥

ततः श्रुत्वा पिता सोऽपि निधिं प्राप्येव निर्धनः ।
मुमुदे नितरां चित्ते वित्तेशं नाभ्यलक्ष्यत ॥ ६९ ॥

ज्ञात्वा शिवगुरुस्तूर्णं यज्वनामग्रणीस्ततः ।
विप्रानाकारयामास पुरन्ध्रीरपि सर्वतः ॥ ७० ॥

तदोत्सवो महानासीत् पुरे सद्मनि सन्ततम् ।
धान्यराशीन्मखिभ्योऽसौ विद्वद्भ्यो भूयः प्रदत्तवान् ॥ ७१ ॥

धनानि भूरि विप्रेभ्यो वेदविद्भ्यो दिदेश सः ।
वासांसि भूयो दिव्यानि सफलानि प्रदत्तवान् ॥ ७२ ॥

पुरन्ध्रीणां च नीरन्ध्रं वस्तुजातमदादसौ ।
घटोध्नीर्बहुशो गाश्च सालङ्काराः सदक्षिणाः ॥ ७३ ॥

ततः शिवगुरुर्यज्वा ब्राह्मणान्पूर्वतोऽधिकम् ।
सन्तर्प्य बन्धुभिः सार्धं मुदितो न्यवसत् सुधीः ॥ ७४ ॥

सत्कारपूर्वमभियुक्तमुहूर्तवेदिविप्राः शशंसुरभिवीक्ष्य सुतस्य जन्म ।
सर्वज्ञ एव भविता रचयिष्यते च शास्त्रं स्वतन्त्रमथ वागधिपांश्च जेता ॥ ७५ ॥

कीर्तिं स्वकां भुवि विधास्यति यावदेष किं बोधितेन बहुना शिशुरेष पूर्णः ।
नापृच्छि जीवितमनेन च तैर्न चोक्तं प्रायो विदन्नपि न वक्त्यशुभं शुभज्ञः ॥७६॥

शम्भोर्वरमनुप्राप्य पिता शिवगुरुः किल ।
आयुषो ह्रस्वतां जानन्नपि नोवाच किञ्चन ।
सर्वज्ञत्वादिसुगुणान् शम्भूक्तांस्तस्य संस्मरन् ॥ ७७ ॥

तदा स्तनन्धयं नार्यः कुमारमिव देवताः ।
दिदृक्षवः समाजग्मुः तिग्मांशुं मुनियोषितः ॥ ७८ ॥

पश्यन्त्यः स्वं त्यजन्त्योऽपि कृत्यं यद्यद्गृहोचितम् ।
सप्रजास्ताः प्रजा बालमुद्यदिन्दुनिभाननम् ॥ ७९ ॥

सदा निरीक्षितुं बालं यास्यतां प्रतियास्यताम् ।
आनन्दबाष्पसलिलैः पङ्किला भूरभूत्तदा ॥ ८० ॥

द्वादशेऽहनि तं बालमङ्कमारोप्य कौतुकात् ।
चक्रे शङ्करनामानं पिता शङ्करभक्तिमान् ॥ ८१ ॥

अर्धेन्दुशेखरस्यायमवतारममुं विदन् ।
शङ्करं जगतां चक्रे शङ्करं नामतोऽपि सः ॥ ८२ ॥

यत्पश्यतां शिशुरसौ कुरुते शमग्र्यं तेनाकृतास्य जनकः किल शङ्कराख्याम् ।
यद्वा चिराय किल शङ्करसंप्रसादात् जातस्ततो व्यधित शङ्करनामधेयम् ॥ ८३ ॥

श्रीमान्मुदा शुभतमेऽहनि चारु नाम चक्रे पिता सपदि शङ्कर इत्यमुष्य ।
अन्वर्थनाम भुवि शङ्करणेन यद्वा शं सर्वदा करवशं ध्रुवमस्य भावि ॥ ८४ ॥

मूर्धनि हिमकरचिह्नं निटिले नयनाङ्कमंसयोः शूलम् ।
वपुषि स्फटिकसवर्णं प्राज्ञास्तं मेनिरे शम्भुम् ॥ ८५ ॥

सर्वं विदन् सकलशक्तियुतोऽपि बालो मानुष्यजातिमनुकृत्य चचार तद्वत् ।
बालः शनैर्हसितुमारभत क्रमेण स्रप्तुं शशाक गमनाय पदाम्बुजाभ्याम् ॥ ८६ ॥

उदचारयदर्भको गिरः पदचारानतनोदनन्तरम् ।
विकलोऽभवदादिमात्तयोः पिकलोकश्चरमान्मरालकः ॥ ८७ ॥

नवविद्रुमपल्लवास्तृतामिव काश्मीरपरागपाटलाम् ।
रचयन्नचलां पदत्विषा स चचारेन्दुनिभः शनैः शनैः ॥ ८८ ॥

राज्यश्रीरिव नयकोविदस्य राज्ञो विद्येव व्यसनदवीयसो बुधस्य ।
शुभ्रांशोश्छविरिव शारदस्य पित्रोः सन्तोषैः सह ववृधे तदीयमूर्तिः ॥ ८९ ॥

लालाजलसुधाबिन्दुस्यन्दन्मधुरिमाक्षरम् ।
स्वल्पं जजल्प शिल्पेन तातेत्यम्बेति मञ्जुलम् ॥ ९० ॥

स्वयं त्रिजगदालंबोऽप्यवलम्ब्य करं पितुः ।
दुर्मतानि विनिर्जेतुं यास्यन्निव चचार सः ॥ ९१ ॥

क्रमेण बालकैः साकं सवयोभिः सुबुद्धिभिः ।
बहिर्निर्गन्तुमप्यैच्छद्वारितोऽपि पुनः पुनः ॥ ९२ ॥

भाषामवेत्प्रथमहायन एव बालो वर्णान्पपाठ किल हायनके द्वितीये ।
ग्रन्थाक्षराण्यपि स वाचयितुं प्रगल्भः काव्यं पुराणमितिहासकथाः पपाठ ॥ ९३ ॥

अजनि दुःखकरो न गुरोरसौ श्रवणतः सकृदेव परिग्रही ।
सहनिपाठजनस्य गुरुः स्वयं स च पपाठ ततो गुरुणा विना ॥ ९४ ॥

रजसा तमसाऽप्यनाश्रितो रजसा खेलनकाल एव हि ।
स कलाधरसत्तमात्मजः सकलाश्चापि लिपीरविन्दत ॥ ९५ ॥

चूडाकृतिं व्यतनुत द्विजराजचूडारत्नस्य च स्त्रयमथो विधिवद्विधिज्ञः ।
वैधेन तेजउदयेन विशेषभास्वान् उत्तेजितो मणिरिवैष तदा विरेजे ॥ ९६ ॥

अमुना तनयेन भूपितं यमुनाताससमानवर्चसा ।
तुलया रहितं निजं कुलं कलयामास स पुत्रिणां वरः ॥ ९७ ॥

॥ इति श्रीशङ्करविजयमकरन्दसारे द्वितीय आस्वादः समाप्तः ॥

# ॥ तृतीय आस्वादः ॥

## बाललीला ।

श्रीमते शङ्करार्याय धीमतेऽद्भुतशक्तये ।
नमोऽस्त्वद्वैतसिद्धान्तस्थापनोपात्तमूर्तये ॥ १ ॥

चरत्यस्मिन् सजानुभ्यां पाणिभ्यां भवनाङ्गणे ।
तपःसत्यदयाशौचान्याचरन् भुवनाङ्गणे ॥ २ ॥

तस्मिन्प्रस्थातुमनसि पादाभ्यां विप्रदारके ।
श्रुतिस्मृत्युदितौ धर्मौ जगत्यां सुप्रतिष्ठितौ ॥ ३ ॥

अब्दपूर्तिमहे प्राप्ते सुताभ्युदयकृत्पिता ।
वृषाचलेशमानर्च पूजाद्रव्यैर्विशेषतः ॥ ४ ॥

यदर्पितं तत्र लिङ्गे भूषामाल्याम्बरादिकम् ।
तत्सर्वं स्वसुताङ्गस्थं सद्यो वीक्ष्य स विस्मितः ॥ ५ ॥

ब्रह्मोत्सवे रथस्थं तौ दम्पती दर्शकौ हरम् ।
आगतौ स्वमुमाङ्के च स्वाङ्के चापश्यतां सुतम् ॥ ६ ॥

जातु वात्याकुले ग्रामे त्वपश्यन्तस्तमर्भकम् ।
तत्र तत्र विचिन्वन्तो जनाः संभ्रान्तमानसाः ॥ ७ ॥

दिष्ट्या लब्धोऽयमित्युक्त्वा तमेवैकं पृथक् पृथक् ।
युगपद्गृहमानिन्युस्तानष्टौ वीक्ष्य विस्मिताः ॥ ८ ॥

पिताऽप्यन्विष्य जग्राह तमेकं हरिसंनिधेः ।
पित्राऽऽनीतेऽर्भके दृष्टे नादृश्यन्तेतरार्भकाः ॥ ९ ॥

एवंविधाभिर्लीलाभिः दिव्याभिर्दिव्यमात्मनः ।
द्योतयन्नैश्वरं भावं विजहार स बालवत् ॥ १० ॥

## चौलविधानम् ।

तृतीयाब्देऽभ्युदयति ज्योतिश्शास्त्रकलाविदः ।
आकार्य सूर्यसिद्धान्तसुधाकूपारपारगान् ॥ ११ ॥

सुमुहूर्ते सुलग्ने च शुभनक्षत्रसंयुते ।
अनेहसि महोदारे द्राविडाचारसंमतम् ॥ १२ ॥

चौलोत्सवमथाकार्षीत् सोऽयं शिवगुरुर्मखी ।

## विद्याभ्यासः ।

ततो निपुणतां दृष्ट्वा बालकस्य सुविस्मितः ॥ १३ ॥

अक्षराभ्यासमाचष्ट सर्वशास्त्रविवित्सया ।
हिरण्यगर्भः प्राक्सृष्टां विष्टपानां ततीमिव ॥ १४ ॥

सस्मार सुकुमारोऽसौ जग्राह प्राक्तनीः कलाः ।
नदीमुखादिवाम्भोधिः सलिलान्यखिलान्यपि ॥ १५ ॥

अक्षरग्रहणव्याजात् शास्त्राणि विविधान्यपि ।
बालक्रीडोचिताः सर्वाश्चकर्ष विविधाः कलाः ॥ १६ ॥

किरणा दर्पणे भानोरिव यत्र चकाशिरे ।
कोशानधीतवानाशु स्तोत्राण्यपि महेशितुः ॥ १७ ॥

## देवीप्रसादप्राप्तिः ।

देवीं भक्त्या शिवगुरुः ग्रामान्तालयसंस्थिताम् ।
नित्यमाराधयामास क्षीरं स्वादु निवेदयन् ॥ १८ ॥

शङ्कराय ददौ शिष्टं क्षीरात्किञ्चिन्निवेदितात् ।
पित्रा दत्तं पिबत्येषा देवी शिष्टं ददाति मे ॥ १९ ॥

देव्याः प्रसाद इति तत् शिशुः पिबति नित्यशः ।
ग्रामाद्बहिर्जिगमिषुः कदाचिदथ स द्विजः ॥ २० ॥

आर्यामनुशशासेत्थं यावदागमनं मम ।
देव्या आराधनं नित्यं कुरु क्षीरं निवेदय ॥ २१ ॥

गते भर्तरि सा देव्याश्चकारार्हणमुत्तमम् ।
शिष्टं निवेदितात्क्षीरं शङ्कराय ददौ मुदा ॥ २२ ॥

स्त्रीधर्मिणी कदाचित्सा बहिर्नैयाय, शंकरम् ।
आहूयोपह्वरे पूजां विधातुमदिशत्क्रमम् ॥ २३ ॥

बालो देवीगृहं गत्वा देवीं संस्नाप्य भक्तितः ।
मात्रा दत्तं पयः सर्वं निधाय पुरतोऽम्बिकाम् ॥ २४ ॥

पिबेति प्रार्थयामास न किञ्चिदभवत्ततः ।
अम्बाक्रुद्धाऽथवाऽप्रीता न गृह्णाति यतः पयः ॥ २५ ॥

इति मत्वा रुरोदास्याः पुरतो बालभावतः ।
देवी करुणया तत्र सन्निधायापिबत्पयः ॥ २६ ॥

पात्रं रिक्तं तदालोक्य मह्यं किञ्चिन्न शेषितम् ।
मह्यं देयं पयः कुत्रेत्यरुदत्स हठाच्छिशुः ॥ २७ ॥

ततोऽपीतकुचाम्बापि साऽभवद्बालवत्सला ।
बालमङ्के समारोप्य लालयन्ती पयो ददौ ॥ २८ ॥

सारस्वतः पयःपारावारः स्तन्याकृतिस्तया ।
पायितो दयया प्रौढकविस्तेनाभवच्छिशुः ॥ २९ ॥

बालोऽप्यबालप्रतिभो देवीतत्त्वरहस्यवित् ।
देवीदर्शनमोदेन माद्यन्नुच्चैरगायत ॥ ३० ॥

विरिञ्च्यादिभिः पञ्चभिर्लोकपालैः समूढे महानन्दपीठे निषण्णम् ।
धनुर्बाणपाशांकुशप्रोतहस्तं महस्त्रैपुरं शङ्कराद्वैतमव्यात् ॥ ३१ ॥

शरेष्वेव नासा धनुष्वेव जिह्वा जपापाटले लोचने ते स्वरूपे ।
त्वगेषा भवच्चन्द्रखण्डे श्रवो मे गुणे ते मनोवृत्तिरम्ब त्वयि स्यात् ॥ ३२ ॥

एवं स्तुवन्नमन् भक्त्या पूजां परिसमाप्य च ।
दयावतीदत्तदुग्धपानलब्धात्मदर्शनिः ॥ ३३ ॥

देव्यगाराद्विनिष्क्रान्तो मार्गे पित्रा च सङ्गतः ।
पितरौ विदितार्थौ तावकरोद्विस्मितान्तरौ ॥ ३४ ॥

आसन्नपञ्चवर्षोऽयं बालको न तु बालिशः ।
किशोराकारसंछन्नः कार्तिकेयो न संशयः ॥ ३५ ॥

अवतीर्णोऽथवा विष्णुः पुनर्बालत्वमाश्रितः ।
आधत्त रूपमपरं नूनं सत्यवतीसुतः ।
इत्येवं तुष्टुवुर्हृष्टाः दृष्टमेव तमर्भकम् ॥ ३६ ॥

उपनीय दिवं गते स्वताते व्यपदिश्यागमसंग्रहेऽप्यतीते ।
निजमातरमन्वमीमनद्यो नियमार्तिं स मुदे ममास्तु सद्यः ॥ ३७ ॥

शिवगुरुरुपनीय शङ्करार्यं निगममशेषमथाध्यजीगपत्तम् ।
नियतिरिदमसासहिं नीचा नियतमनीनयदन्तरे गुरुं द्याम् ॥ ३८ ॥

चौलं कर्म समाप्य चोपनयनं ताते दिवं प्रस्थिते
मात्राज्ञां शिरसा प्रगृह्य समगात्तूर्णं गुरूणां कुलम् ।
तत्राध्यायपरो यथाविधि चरन् भिक्षां जटी मेखली
दण्डी सर्वकलासु शास्त्रगहनेष्वप्यप्रधृष्यो बभौ ॥ ३९ ॥

ततः शिवगुरुर्यज्वा श्रीमान्धीमान्कुतूहली ।
पञ्चम्यां शरदि प्राप्तुमिच्छन्स्यामपि सत्वरम् ॥ ४० ॥

प्रतीक्ष्य प्रतिभां वर्चस्तनौ दक्षिणतामपि ।
उपनीतिं यथाशास्त्रं विधातुमतनोन्मतिम् ॥ ४१ ॥

पञ्चमाब्दोपनीतश्चेद् ब्रह्मवर्चसमृच्छति ।
इति सूत्रं समालम्ब्य निजतेजःसमुज्ज्वलम् ॥ ४२ ॥

ब्राह्मेण तेजसा भूयो नियोक्तुं द्रुतमैहत ।
तदुत्सवसद्वस्तुजातं द्रुतमनीनयत् ॥ ४३ ॥

विचार्य बहुशः शास्त्रं निर्दुष्टे स्वेष्टसाधके ।
लोकबन्धौ दिनेशस्य व्रजत्यपि हरित्तटम् ॥ ४४ ॥

सुमुहूर्ते सुनक्षत्रे सद्योगकरणान्विते ।
वासरे भासुरे भव्ये दिव्यलक्षणलक्षिते ॥ ४५ ॥

अतनिष्टोपनीतिं स समस्तैर्बन्धुभिर्युतः ।
कृतोपनीतिर्बालोऽपि हुतभुक्सूर्यतेजसा ॥ ४६ ॥

यथा व्यराजत तथादीव्यद् ब्राह्मेण तेजसा ।
दक्षिणा दीक्षितः सोऽपि वनीपकजनावनौ ॥ ४७ ॥

पयोद इव सौवर्णवृष्टीस्तुष्टो ववर्ष सः ।
अरुन्धतीसदृक्षाऽऽर्या दारास्तस्याग्रजन्मनः ॥ ४८ ॥

माल्यैरानन्दयामास पुरन्ध्रीरति सत्वरम् ।
तोषयामास मृष्टान्नैर्देवता इव भक्तितः ॥ ४९ ॥

वृषाचलेश्वरप्रीत्यै स्वच्छन्दं यच्छति स्म सा ।
पश्यतस्तस्य पुत्रास्यं सुधासूतिमिवोदितम् ॥ ५० ॥

पयोधेरिव कल्लोलाः प्रमदा न ममुर्हृदि ।
ततः परं स कुतुकी श्रीमान् शिवगुरुर्मखी ॥ ५१ ॥

कदाचिदीश्वरे नित्ये सत्ये चित्तं निधाय सः ।
ध्यायन्नन्तः परं तत्त्वं स्थितवान्सुविनिश्चलः ॥ ५२ ॥

पञ्चत्वमगमत्सद्यः कालो हि दुरतिक्रमः ।
वल्लभे पञ्चतां याते शोकविह्वलमानसा ॥ ५३ ॥

भार्या बालसुता वृद्धा रुरोद करुणं सती ।
क्रमेणाश्वासिता वृद्धैः शोकमुत्सृज्य सा ततः ॥ ५४ ॥

सुतेन कारयामास संस्कारादिक्रियाः पितुः ।
स वत्सरान्तं दीक्षां च दधार विधिवत्पितुः ॥ ५५ ॥

### श्रीशङ्करस्य गुरुकुलवासः ।

अधिजगे निगमांश्चतुरोऽपि स क्रमत एव गुरोः सषडङ्गकान् ।
अजनि विस्मितमत्र महामतौ द्विजसुतेऽल्पतनौ जनतामनः ॥ ५६ ॥

सहनिपाठ्युता वटवस्समं पठितुमैशत न द्विजसूनुना ।
अपि गुरुर्विशयं प्रतिपेदिवान् क इव पाठयितुं सहसा क्षमः ॥ ५७ ॥

अत्र किं स यदशिक्षत सर्वान् चित्रमागमगणाननुवृत्तः ।
द्वित्रमासपठनादभवद्यत् तत्र तत्र गुरुणा समविद्यः ॥ ५८ ॥

## विप्रपत्न्या लक्ष्म्यनुग्रहप्रापणम्

स हि जातु गुरोः कुले वसन् सवयोभिः सह भैक्ष्यलिप्सया ।
भगवान्भवनं द्विजन्मनो धनहीनस्य विवेश कस्यचित् ॥ ५९ ॥

तमवोचत तत्र सादरं वटुवर्यं गृहिणः कुटुम्बिनी ।
कृतिनो हि भवादृशेषु ये वरिवस्यां प्रतिपादयन्ति ते ॥ ६० ॥

विधिना किल वञ्चिता वयं वितरीतुं वटवे न शक्नुमः ।
अपि भैक्षमकिञ्चनत्वतो धिगिदं जन्म निरर्थकं गतम् ॥ ६१ ॥

इति दीनमुदीरयन्त्यसौ प्रददावामलकं व्रतीन्दवे ।
करुणं वचनं निशम्य सोऽप्यभवद् ज्ञाननिधिर्दयार्द्रधीः ॥ ६२ ॥

स मुनिर्मुरभित्कुटुम्बिनीं पदचित्रैर्नवनीतकोमलैः ।
मधुरैरुपतस्थिवान् स्तवैर्द्विजदारिद्र्यदशानिवृत्तये ॥ ६३ ॥

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदास्तु मम मङ्गलदेवतायाः ॥ ६४ ॥

दद्याद्दयानुपवनो द्रविणाम्बुधारां अस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे ।
दुष्कर्मघर्ममपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः ॥ ६५ ॥

अथ कैटभजित्कुटुम्बिनी तटिदुद्दामनिजाङ्गकान्तिभिः ।
सकलाश्च दिशः प्रकाशयन्त्यचिरादाविरभूत्तदग्रतः ॥ ६६ ॥

अभिवन्द्य सुरेन्द्रवन्दितं पदयुग्मं पुरतः कृताञ्जलिम् ।
ललितस्तुतिभिः प्रहर्षिता तमुवाच स्मितपूर्वकं वचः ॥ ६७ ॥

विदितं तव वत्स हृद्गतं कृतमेभिर्न पुराभवे शुभम् ।
अधुना मदपाङ्गपात्रतां कथमेते महितामवाप्नुयुः ॥ ६८ ॥

इति तद्वचनं स शुश्रुवान् निजगादाम्ब मयीदमर्पितम् ।
फलमद्य ददस्व तत्फलं दयनीयो यदि तेऽहमिन्दिरे ॥ ६९ ॥

अमुना वचनेन तोषिता कमला तद्भवनं समन्ततः ।
कनकामलकैरपूरयत् जनताया हृदयं च विस्मयैः ॥ ७० ॥

अमरस्पृहणीयसम्पदं द्विजवर्यस्य निवेशमात्मवान् ।
स विधाय यथापुरं गुरोः सविधे शास्त्रवराण्यशिक्षत ॥ ७१ ॥

इतिहासपुराणभारतस्मृतिशास्त्राणि पुनः पुनर्मुदा ।
विबुधैः सुबुधो विलोकयन् सकलज्ञत्वपदं प्रपेदिवान् ॥ ७२ ॥

स पुनः पुनरैक्षतादराद्वरवैयासिकशान्तिवाक्कृतीः ।
समगादुपशान्तिसम्भवां सकलज्ञत्ववदेव शुद्धताम् ॥ ७३ ॥

## मातृशुश्रूषा ।

इति सप्तमहायनेऽखिलश्रुतिपारंगततां गतो वटुः ।
परिवृत्य गुरोः कुलाद्गृहे जननीं पर्यचरन्महायशाः ॥ ७४ ॥

परिचरन् जननीं निगमं पठन्नपि हुताशरवी सवनद्वयम् ।
मनुवरैर्नियतं परिपूजयन् वटुरवर्तत संस्तरणिर्यथा ॥ ७५ ॥

वटुमुदीक्ष्य युवाऽपि न मन्युमान् दिशति वृद्धतमोऽपि निजासनम् ।
अपि करोति जनः करयोर्युगं वशगतो विहिताञ्जलि तत्क्षणात् ॥ ७६ ॥

मृदु वचश्चरितं कुशलां मतिं वपुरनुत्तममास्पदमोजसाम् ।
सकलमेतदुदीक्ष्य सुतस्य सा सुखमवाप निरर्गलमम्बिका ॥ ७७ ॥

राजशेखरनामाथ राजा तं द्विजशेखरम् ।
स्वभ्यर्च्य श्रावयामास स्वकृतं नाटकत्रयम् ॥ ७८ ॥

अनुजज्ञे गृहान् गन्तुमभिनन्द्य जनाधिपम् ।
दशापि नास्पृशत्तेन दत्तानि द्रविणानि सः ॥ ७९ ॥

दूरयानाक्षमां दृष्ट्वा जरया जननीमसौ ।
किञ्चिद्दूरगतां चूर्णीं निन्ये निजगृहान्तिकम् ।
अम्बापगेति चाख्याता तस्यां ककुभि सा नदी ॥ ८० ॥

## नक्रग्रहणं सन्न्यासस्वीकरणं च ।

सा शङ्करस्य शरणं स च तज्जनन्याः
अन्योन्ययोगविरहस्त्वनयोरसह्यः ।
नोद्वोढुमिच्छति तथाप्यमनुष्यभावाद्
मेरुं गतः किमभिवाञ्छति दुष्प्रदेशम् ॥ ८१ ॥

स्नानार्थमेकदा तस्मिन्नवतीर्णे नदीजले ।
अग्रहीत्तीक्ष्णदंष्ट्रस्तं ग्राहः पादे महाबलः ॥ ८२ ॥

निजाक्रोशं समाकर्ण्य मातरं द्रुतमागताम् ।
सोऽब्रवीदम्ब मां नक्रो बलवानग्रहीत्पदे ॥ ८३ ॥

करवाणि किमम्बाहं कालो हि दुरतिक्रमः ।
अष्टमूर्तिरदाद्यन्मां अष्टवर्षैकजीवितम् ॥ ८४ ॥

विधिना विहितः कालो विषमोऽयमुपागतः ।
पुत्रकृत्यमकृत्वा मत्पुत्र यासि कथं न्विति ॥ ८५ ॥

उच्चकै रुदतीमेनामुवाच स पुनः सुधीः ।
चतुर्थमाश्रमं प्राप्य जन्मान्तरतयोदितम् ॥ ८६ ॥

पुत्रकृत्याय जीवामि पुनरष्टावहं समाः ।
सन्न्यासी भवितुं बुद्ध्या यदि निश्चिनुयामहम् ॥ ८७ ॥

मोक्ता मामयमह्नाय नात्र कार्या विचारणा ।
उक्तेति निजपुत्रेण तस्य जीवितकांक्षया ॥ ८८ ॥

साऽनुमेने च तूर्णं सन्न्यस्तुं चात्मनाऽमुना ।
तया तथेत्यनुज्ञातः तपस्विन्या कथञ्चन ॥ ८९ ॥

सन्न्यस्तोऽहमिति प्राह सन्निरुध्येन्द्रियाणि सः ।
नैव निश्चितसन्न्यासः कुर्यात्कालविलम्बनम् ।
ततोऽद्यैव गमिष्यामि त्वां निधाय सुहृज्जने ॥ ९० ॥

मातर्विधेयमनुशाधि यदत्र कार्यं सन्न्यासिना तनु करोमि न सन्दिहेऽहम् ।
वस्त्राशने तव यथेष्टममी प्रदेयुः गृह्णन्ति ये धनमिदं मम पैतृकं यत् ॥ ९१ ॥

देहेऽम्ब रोगवशगे च सनाभयोऽमी द्रक्ष्यन्ति शक्तिमनुसृत्य मृतिप्रसङ्गे ।
अर्थग्रहाज्जनभयाच्च यथाविधानं कुर्युश्च संस्कृतिममी न विभेयमीषत् ॥ ९२ ॥

यज्जीवितं जलचरस्य मुखात्तदिष्टं सन्न्याससंगरवशान्मम देहपाते ।
संस्कारमेत्य विधिवत्कुरु शङ्कर त्वं नो चेत्प्रसूय मम किं फलमीरय त्वम् ॥ ९३ ॥

अह्यम्ब रात्रिसमये समयान्तरे वा सञ्चिन्तय स्ववशगाऽवशगाऽथवा माम् ।
एष्यामि तत्र समयं सकलं विहाय विश्वासमाप्नुहि मृतावथ संस्करिष्ये ॥ ९४ ॥

सन्न्यस्तवान् शिशुरयं विधवामनाथां क्षिप्त्वेति मां प्रति कदापि न चिन्तनीयम् ।
यावन्मया स्थितिमता फलमापनीयं मातस्ततः शतगुणं फलमापयिष्ये ॥ ९५ ॥

इत्थं स मातरमनुग्रहणेच्छुरुक्त्वा प्रोचे सनाभिजनमेष विचक्षणाग्र्यः ।
सन्न्यासकल्पितमना व्रजिताऽस्मि दूरं तां निक्षिपामि जननीमधवां भवत्सु ॥ ९६ ॥

एवं सनाभिजनमुत्तममुत्तमाग्र्यः श्रीमातृकार्यमभिभाष्य करद्वयेन ।
संप्रार्थयन् स्वजननीं विनयेन तेषु न्यक्षेपयन्नयनजाम्बु निषिञ्चमानाम् ॥ ९७ ॥

ततो दिव्याम्बरधरस्तप्तचामीकरप्रभः ।
देवभूयं गतो नक्रो दिवि तिष्ठन्नवोचत ॥ ९८ ॥

भवत्प्रसादान्मुक्तोऽस्मि भारतीप्रियशापतः ।
क्षमस्व मन्तुमित्युक्त्वा क्षणादन्तरधत्त सः ॥ ९९ ॥

श्रीकृष्णप्रतिष्ठा ।

शङ्करः पुरतोऽपश्यत्कश्चिदिन्दीवरत्विषम् ।
महानुभावमूचे तं शङ्करं स महोनिधिम् ॥ १०० ॥

अप्रमेयानुभाव त्वं वासुदेवं शिलामयम् ।
वसन्तमिह साधूनां रक्षणार्थमवेहि माम् ॥ १०१ ॥

त्वया मातृहितं कर्तुम् आनीतातिसमीपगा ।
मद्धामोर्मिकरैरेषा ताडयत्यनिशं नदी ॥ १०२ ॥

प्रतिवर्षं महावेगैरन्तर्गृहमुपागतैः ।
सलिलैः क्षाल्यमानोऽस्या आसन्नपतनोऽस्म्यहम् ॥ १०३ ॥

प्रयाते भवति क्षिप्रं यास्याम्यहमपि ध्रुवम् ।
तस्माद्विधाय मद्रक्षां याहि काङ्क्षितसिद्धये ॥ १०४ ॥

इत्युक्तस्य शिलारूपं दोर्भ्यामुद्धृत्य तं शनैः ।
किञ्चिद्दूरं नदीतीरे नीत्वा चक्रे प्रतिष्ठितम् ॥ १०५ ॥

तस्माज्जनन्याश्च ततो लब्ध्वानुज्ञां नतोऽप्युभौ ।
शङ्करोऽतीव निस्सङ्गः सन्न्यासाय जगाम सः ॥ १०६ ॥

पथि चात्मानमद्वन्द्वं निराकारं निरञ्जनम् ।
नित्यमुक्तं नित्यशुद्धं शिवं दध्यौ यतीन्द्रियः ॥ १०७ ॥

नाहं देहो नेन्द्रियाण्यन्तरङ्गो नाहंकारः प्राणिवर्गो न बुद्धिः ।
दारापत्यक्षेत्रवित्तादिदूरः साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥ १०८ ॥

गुरोश्चरणसेवाया अन्यत्र कृतकृत्यताम् ।
आत्मानुभवसिद्धिञ्चापश्यन्नन्वैष्ट तं गुरुम् ॥ १०९ ॥

॥ इति श्रीशङ्करविजयमकरन्दसारे तृतीय आस्वादः समाप्तः ॥

## ॥ चतुर्थ आस्वादः ॥

### श्रीगोविन्दभगवत्पूज्यपादेभ्यः क्रमसन्न्यासाश्रमस्वीकारः ।

प्रतिचन्द्रभवं निवृत्तिधर्मा श्रितगोविन्दमुनेरवाप्तधर्मा ।
जयतात् कृतसूत्रभाष्यकर्मा स्वयमन्तेवसतां वितीर्णशर्मा ॥ १ ॥

कृष्णात्स्वमातुरपि भक्तिवशादनुज्ञामादाय संसृतिमहाब्धिविरक्तिभाक् सः ।
गन्तुं मनो व्यधित सन्न्यसनाय दूरं किं नौस्थितः पतितुमिच्छति वारिराशौ ॥२॥

इत्थं विचिन्त्य सरितो नगराणि शैलान्
ग्रामान् जनानपि पशून् पथि सोऽपि पश्यन् ।
नन्वैन्द्रजालिक इवाद्भुतमिन्द्रजालं
ब्रह्मैवमेव परिदर्शयतीति मेने ॥ ३ ॥

दण्डान्वितेन धृतरागवनवाम्बरेण गोविन्दनाथवनमिन्दुभवातटस्थम् ।
तेन प्रविष्टमजनिष्ट दिनावसाने चण्डत्विषा च शिखरं चरमाचलस्य ॥ ४ ॥

तीरद्रुमागतमरुद्विगतश्रमः सन् गोविन्दनाथवनमध्यतलं लुलोके ।
शंसन्ति यत्र तरवो वसतिं मुनीनां शाखाभिरुज्ज्वलमृगाजिनवल्कलाभिः ॥ ५ ॥

तपोवने प्रविष्टोऽसौ कंचित्संपृष्टवान्मुनिम् ।
गोविन्दपूज्यपादानामाश्रमः कुत्र भो मुने ॥ ६ ॥

पृष्टः सन्दर्शयामास गोविन्दस्वामिनां गुहाम् ।
दृष्ट्वैव दूरतो भक्त्या दण्डवत्प्रणनाम सः ॥ ७ ॥

गोविन्दमाश्रयदहीन्द्रमहावतारमारात्तुषारकरदेहभुवस्तटिन्याः ।
अध्यात्मजेन गलितात्मभवाभिमानेनाराधितं च हरिणा नियमं श्रितेन ॥ ८ ॥

आदेशमेकमनुयोक्तुमयं व्यवस्यन् प्रादेशमात्रविवरप्रतिहारभाजम् ।
तत्र स्थितेन कथितां यमिनां गणेन गोविन्ददेशिकगुहां कुतुकी ददर्श ॥ ९ ॥

तस्याः प्रपन्नपरितोषदुहो गुहायाः स त्रिः प्रदक्षिणपरिक्रमणं विधाय ।
द्वारं प्रति प्रणिपतन् जपतां पुरोगं तुष्टाव तुष्टहृदयस्तमपास्तशोकम् ॥ १० ॥

पर्यङ्कतां भजति यः पतगेन्द्रकेतोः पादाङ्गदत्वमथवा परमेश्वरस्य ।
तस्यैव मूर्ध्नि धृतसाब्धिमहीध्रभूमेः शेषस्य विग्रहमशेषमहं भजे त्वाम् ॥ ११ ॥

दृष्ट्वा पुनर्निजसहस्रमुखीमभैषुः अन्तेवसन्त इति तामपहाय भूयः ।
एकाननेन भुवि यस्त्ववतीर्य शिष्यान् अन्वग्रहीत् ननु स एव पतञ्जलिस्त्वम् ॥१२॥

तमखिलगुणपूर्णं व्यासपुत्रस्य शिष्यात् अधिगतपरमार्थं गौडपादान्महर्षेः ।
अधिजिगमिषुरेष ब्रह्मसंस्थामहं त्वां प्रसृमरमहिमानं प्रापमेकान्तभक्त्या ॥ १३ ॥

तस्मिन्निति स्तुवति कस्त्वमिति ब्रुवन्तं दिष्ट्या समाधिपथरुद्धविसृष्टचित्तम् ।
गोविन्ददेशिकमुवाच तदा स वाग्भिः प्राचीनपुण्यजनितात्मविबोधचिह्नैः ॥ १४ ॥

न भूमिर्न तोयं न तेजो न वायुः न खं नेन्द्रियं वा न तेषां समूहः ।
अनेकान्तिकत्वात् सुषुप्त्येकसिद्धः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १५ ॥

आकर्ण्य शङ्करमुनेर्वचनं तदित्थं अद्वैतदर्शनसमुत्थमुपात्तहर्षः ।
स प्राह शङ्कर स शङ्कर एव साक्षात् जातस्त्वमित्यहमवैमि समाधिनेति ॥ १६ ॥

तस्योपदर्शितवतश्चरणावथ शङ्करः ।
अपूजयद्गुहाद्वारे प्रणनाम पुनः पुनः ॥ १७ ॥

जगज्जनिस्थेमलयालयाभ्यां अगण्यपुण्योदयभाविताभ्याम् ।
त्रयीशिरोजातनिवेदिताभ्यां नमो नमः श्रीगुरुपादुकाभ्याम् ॥ १८ ॥

ब्रह्मानन्दसुधाभूतिकलितैः पूतैः सुशीतैः सितैः
युष्मद्वाक्कलशोज्झितैः श्रुतिसुखैर्वाक्यामृतैः सेचय ।
सन्तप्तं भवतापदावदहनज्वालाभिरेनं प्रभो
धन्यास्ते भवदीक्षणक्षणगतेः पात्रीकृताः स्वीकृताः ॥ १९ ॥

अर्थितो हृदयस्पृग्भिर्वाग्भिर्गोविन्दसंयमी ।
चिरात्प्रतीक्षितं शिष्यं द्रष्टुं बहिरुपाययौ ॥ २० ॥

दृष्ट्वा संयमिनं दीप्ततेजसं धूर्जटिप्रभम् ।
धृत्या शान्त्या विनीत्याऽस्य नियमेन बुभुत्सया ।

अर्हं पारमहंस्याय जगाम परमां मुदम् ॥ २१ ॥
तस्य प्रसादमासाद्य तत्तादृशदयानिधेः ।

सन्न्यासगृह्यविहितं सर्वं कर्माचरत्सुधीः ॥ २२ ॥
ततो विहितसन्न्यासो यथावज्जगृहे ततः ।

सर्वं यतिजनैर्ग्राह्यमुपदेशं महत्तरम् ॥ २३ ॥
कृष्णद्वैपायनाचार्यकृतसूत्रानुरोधतः ।

कृतिं तं नित्यवाङ्मौलिं कृत्स्नमस्मादबुद्ध सः ॥ २४ ॥
जगृहे ब्रह्मतां स्वस्मिन् आचार्यवचसा क्रमात् ।

तत्त्वमस्यादिभिर्वाक्यैः संप्रदायानुसारतः ॥ २५ ॥
परहंसोचितां चर्यामङ्गीकृत्य स्वयं शिवः ।

ब्रह्मैवास्मीति निश्चित्य सर्वत्रासङ्गतामधात् ॥ २६ ॥

क्षीरं ब्रह्म जगन्नीरं हंसवृत्त्या प्रदर्शयन् ।
श्रीगुरोरर्चयन्नंघ्रिं वसन्निन्दुभवातटे ।
वार्षिकांश्चतुरो मासान्नीतवान् ध्यानयोगतः ॥ २७ ॥

हंसभावमधिगत्य सुधीन्द्रे तं समर्चति च संसृतिमुक्त्यै ।
सञ्चचाल कथयन्निव मेघश्चञ्चलाचपलतां विषयेषु ॥ २८ ॥

रेवातीरेऽवसन् सर्वे गोविन्दाद्या यतीश्वराः ।
शङ्करोऽपि च तान् भक्त्या मुदा पर्यचरत्तदा ॥ २९ ॥

## निदिध्यासनम् ।

रंहसाऽथ ससृजुर्जलधाराः वारिदा गगनधाम पिधाय ।
शङ्करो हृदयमात्मनि कृत्वा सञ्जहार सकलेन्द्रियवृत्तीः ॥ ३० ॥

सांप्रदायिकपराशरपुत्रप्रोक्तसूत्रमतगत्यनुरोधात् ।
शास्त्रगूढहृदयं हि दयालोः कृत्स्नमप्ययमबुद्ध सुबुद्धिः ॥ ३१ ॥

वैराग्यभाग्यभरयोग्यसुनिर्मलात्मा धीराग्रगण्यगुणविद्गुरुहर्षदायी ।
द्वैपायनाभिहितसूत्रसमूहशास्त्रं जग्राह तस्य वचनैरखिलं च वेद्यम् ॥३२॥

## नर्मदापूरनिग्रहः ।

प्राणभृत्प्रचरणप्रतिकूले नीलनीलघनशालिनि काले ।
अध्युवास तटमिन्दुभवायाः सुध्युपास्यचरणं गुरुमर्चन् ॥ ३३ ॥

त्रस्तमर्त्यगणमस्तमिताशं हस्तिहस्तपृथुलोदकधाराः ।
मुञ्चति स्म समुदञ्चितविद्युत् पञ्चरात्रमहिशत्रुरजस्रम् ॥ ३४ ॥

तीरभूरुहततीरपकर्षन् आश्रमोटजगणैः सह पूरः ।
आययावधिकघोषमनल्पः कल्पवार्धिलहरीव तटिन्याः ॥ ३५ ॥

गोविन्दं ध्याननिष्ठायां मग्नं दृष्ट्वा गुरुं यतिः ।
विघ्नरूपं नदीशब्दं समाधौ संविचार्य च ॥ ३६ ॥

गुरौ समाधिगे मौनिजनदुःखशमाय च ।
स्ववेगनिग्रहं कर्तुं प्रार्थयामास नर्मदाम् ॥ ३७ ॥

तदा स्तुत्वा नर्मदां तां सोऽभिमन्त्र्य कमण्डलुम् ।
तन्मध्येऽवेशयत् सा तु शशाम च यथापुरम् ॥ ३८ ॥

तं निशम्य निखिलैरपि लोकैः उत्थितोऽस्य गुरुरुक्तमुदन्तम् ।
योगसिद्धिमचिरादयमापेत्यभ्यपद्यततरां परितोषम् ॥ ३९ ॥

## भाष्यकरणायादेशः ।

छात्रमुख्यममुमाह कियद्भिर्वासरैर्गतघने गगने सः ।
पश्य सौम्य शरदा विमलं खं विद्ययेव विशदं परतत्त्वम् ॥ ४० ॥

वारिदा यतिवराश्च सुपाथोधारया सदुपदेशगिरा च ।
ओषधीरनुचरांश्च कृतार्थीकृत्य संप्रति हि यान्ति यथेच्छम् ॥ ४१ ॥

धारणादिभिरपि श्रवणाद्यैः ब्रह्म सत्यमनुभूय निरीहाः ।
वार्षिकाणि दिवसान्यपनीय प्रस्थिता यतिवरा हि महान्तः ॥ ४२ ॥

सौम्य शङ्कर भद्रं तेऽवधेहि गदतो मम ।
नारायणः पद्मभवो वसिष्ठः शक्तिरेव च ॥ ४३ ॥

मुनिः पराशरो व्यासः कृष्णद्वैपायनः शुकः ।
शुकशिष्या गौडपादा एषा गुरुपरंपरा ॥ ४४ ॥

गुरुक्रमागतां ब्रह्मविद्यां बदरिकाश्रमे ।
अध्यगां गौडपादेभ्यः तेषामन्ते वसन्मुदा ॥ ४५ ॥

बादरायणसूत्रानुगताऽधीता यथा मया ।
मत्तोऽधीता त्वया ब्रह्मविद्या श्रुतिशिरोगता ॥ ४६ ॥

गौडपादा गुरुवरा यथाऽनुजगृहुर्मम ।
तैः कृता कारिका वेदशीर्षे माण्डूक्यनामनि ॥ ४७ ॥

सर्वोपनिषदामर्थवर्णने मार्गदर्शिका ।
तां त्वयि प्रतिपाद्यैवं तुष्यामि चिरनिर्वृतः ॥ ४८ ॥

श्रृणुष्वावहितो यन्मे भूयः प्रियमवाप्स्यसि ।
गच्छ वाराणसीं भद्र शिष्यांस्तत्राधिकारिणः ॥ ४९ ॥

बोधयन्नात्मविज्ञानं त्वमेतद्विपुलीकुरु ।
गुरोः करुणयाऽपश्यं भगवन्तं कदाचन ॥ ५० ॥

व्यासं मुनीनां सूत्रार्थं विवृण्वानं हिमाचले ।
विनीतोऽहं पर्यपृच्छं मुनीनामथ सन्निधौ ॥ ५१ ॥

आर्य वेदास्त्वया व्यस्ताः सुग्राह्या मन्दमेधसाम् ।
सूत्रिता ब्रह्ममीमांसा श्रुतिशीर्षपथानुगा ॥ ५२ ॥

लघ्वक्षरत्वात्सूत्राणां विवृतिः काऽप्यपेक्ष्यते ।
यथार्थग्रहणायैषां कृपया विवृतिं कुरु ।
इति पृष्टो गुरुवरो जगादेमं जनं तदा ॥ ५३ ॥

पूर्वमेव दिविषद्भिरुदीर्णः पार्वतीपतिसदस्ययमर्थः ।
वत्स तं श्रृणु समस्तविदेको मत्समस्तव भविष्यति शिष्यः ॥ ५४ ॥

कुम्भ एव सरितः सकलं यः संहरिष्यति महोल्वणमम्भः ।
दुर्मतानि निरसिष्यति सोऽयं शर्मदायि च करिष्यति भाष्यम् ॥ ५५ ॥

इत्युदीर्य मुनिराट् स वनान्ते पत्युराप सुगिरिं गिरिजायाः ।
तन्मुखाच्छ्रुतमशेषमिदानीं सन्मुनिप्रिय मया त्वयि दृष्टम् ॥ ५६ ॥

स त्वमुत्तमपुमानसि कश्चित् तत्ववित्प्रवर नान्यसमानः ।
तद्यतस्व निरवद्यनिबन्धैः सद्य एव जगदुद्धरणाय ॥ ५७ ॥

गच्छ वत्स नगरं शशिमौलेः स्वच्छदेवतटिनीकमनीयम् ।
तावता परमनुग्रहमाद्या देवता तव करिष्यति तत्र ॥ ५८ ॥

एवमेनमनुशास्य दयालुः पावयन्निजदृशा स ददर्श ।
भावतः स्वचरणांबुजसेवामेव शश्वदभिकामयमानम् ॥ ५९ ॥

पङ्कजाभमतुलं पदयुग्मं सोऽभिवन्द्य निरागादसहिष्णुः ।
तद्वियोगमभिसान्त्व्य कथंचित् तद्विलोकनमयन् हृदयाब्जे ॥ ६० ॥

प्रत्यर्पितन्यास इव गोविन्दो निर्वृतो ययौ ।
बदरीं गुरुसेवार्थी कृतार्थेनान्तरात्मना ॥ ६१ ॥

## काशीगमनम् ।

देशिकस्याभिवन्द्यांघ्रि ययौ काशीं स शङ्करः ।
प्रण्यध्यायच्च तां देवीं निजबोधस्वरूपिणीम् ॥ ६२ ॥

मनोनिवृत्तिः परमोपशान्तिः सा तीर्थवर्या मणिकर्णिका च ।
ज्ञानप्रवाहा विमलादिगङ्गा सा काशिकाऽहं निजबोधरूपा ॥ ६३ ॥

काशी धन्यतमाऽविमुक्तनगरी साऽलंकृता गङ्गया
तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि तत्किङ्करी ।

स्वर्लोकस्तुलितः सहैव विबुधैः काश्या समं ब्रह्मणा
काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुत्वं गतः ॥ ६४ ॥

एवं ध्यात्वा यतीशानः काशीं भक्त्या प्रणम्य च ।
गङ्गां भागीरथीं प्राप्य तां तुष्टाव ततोऽमुना ॥ ६५ ॥

शैलेन्द्रादवतारिणी निजजले मज्जज्जनोत्तारिणी
पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी ।
शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी
काशीप्रान्तविहारिणी विजयते गङ्गा मनोहारिणी ॥ ६६ ॥

त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ
वादं तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणोत्सवे ।
मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणात्
तन्मध्याद्भृगुलाञ्छनो गरुडगः पीतांबरो निर्गतः ॥ ६७ ॥

एवं भागीरथीं नत्वा स्तुत्वा स्नात्वा यतीश्वरः ।
सर्वलोकसुखावासं ययौ विश्वेश्वरालयम् ॥ ६८ ॥

विश्वेश्वरं समभ्यर्च्य मनसा स्वात्मरूपिणम् ।
स्तोत्रेणानेन तुष्टाव शङ्करं शङ्करः स्वयम् ॥ ६९ ॥

सानन्दमानन्दवने वसन्तमानन्दकन्दं हतपापवृन्दम् ।
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये ॥ ७० ॥

वाराणसीपुरपते मणिकर्णिकेश वीरेश दक्षमखकाल विभो गणेश ।
सर्वज्ञ सर्वहृदयैकनिवास नाथ संसारदुःखदहनाज्जगदीश रक्ष ॥ ७१ ॥

विश्वेश विश्वभयनाशक विश्वरूप विश्वात्मक त्रिभुवनैकगुणाधिकेश ।
हे विश्वनाथ करुणामय दीनबन्धो संसारदुःखदहनाज्जगदीश रक्ष ॥ ७२ ॥

एवं स्तुत्वा महादेवं विश्वेश्वरमुदारधीः ।
अन्नपूर्णालयं गत्वा तां तुष्टाव स्तवेन सः ॥ ७३ ॥

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलदोषपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ७४ ॥

अन्नपूर्णे सदा पूर्णे शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥ ७५ ॥

प्रदक्षिणक्रमं कुर्वन् क्षेत्रतीर्थनिषेवकः ।
काशीपुराधिनाथं तं कालभैरवमानमत् ॥ ७६ ॥

देवराजसेव्यमानपावनाङ्घ्रिपङ्कजं
व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम् ।
नारदादियोगिवृन्दवन्दितं दिगम्बरं
काशिकापुराधिनाथकालभैरवं भजे ॥ ७७ ॥

निरवधिसुखदेन स्वात्मभावं गतेन प्रथितसुजनकीर्तिः शङ्करो देशिकेन ।
श्रुतिशिखरविचारे प्रेरितोऽसौ हि काशौ यतिवरगुणयुक्तः प्राप्य तस्थौ यतीशः ॥

॥ इति श्रीशङ्करविजयमकरन्दसारे चतुर्थ आस्वादः समाप्तः ॥

## ॥ पञ्चम आस्वादः ॥

### सनन्दनस्य शिष्यतया स्वीकारः ।

कुहनान्त्यजविश्वनाथसृष्टो द्रुहिणव्यासवरोदितानुशिष्टः ।
ममतां मम तावदेष भिन्द्याद् नमतश्चापरतिं ददात्वनिन्द्याम् ॥ १ ॥

विश्वेशश्चरणयुगं प्रणम्य भक्त्या हर्याद्यैस्त्रिदशवरैः समर्चितस्य ।
सोऽनैषीत्प्रयतमना जगत्पवित्रे क्षेत्रेऽसाविह समयं कियन्तमार्यः ॥ २ ॥

अथागमद्ब्राह्मणसूनुराराद् अधीतवेदोऽधरयन्स्वभासा ।
तेजांसि कश्चित् सरसीरुहाक्षो दिदृक्षमाणः किल देशिकेन्द्रम् ॥ ३ ॥

आगत्य देशिकपदाम्बुजयोरपप्तत् संसारवारिधिमनुत्तममुत्तितीर्षुः ।
वैराग्यवानकृतदारपरिग्रहश्च कारुण्यनावमधिरुह्य दृढां दुरापाम् ॥ ४ ॥

उत्थाप्य तं गुरुरुवाच गुरुर्द्विजानां
कस्त्वं क्व धाम कुत आगत आत्तधैर्यः ।
बालोऽप्यबालधिषणः प्रतिभासि मे त्वं
एकोऽप्यनेक इव नैकशरीरभासा ॥ ५ ॥

पृष्टो बभाण गुरुमुत्तरमुत्तरज्ञो
विप्रो गुरो मम गृहं बुध चोलदेशे ।
यत्रापगा वहति पुण्यकवेरकन्या
यस्याः पयो हरिपदाम्बुजभक्तिमूलम् ॥ ६ ॥

अटाट्यमानो महतो दिदृक्षुः क्रमादिमं देशमुपागतोऽस्मि ।
बिभेमि मज्जन् भववारिराशौ तत्पारगं मां कृपया विधेहि ॥ ७ ॥

अपाङ्गैरुत्तुङ्गैरमृतझरभङ्गैः परगुरो
शुचा दूनं दीनं कलय दयया मामविमृशन् ।
गुणं वा दोषं वा न कथमपि सञ्चिन्तय विभो
प्रपद्ये त्वामार्यं निरवधिकृपानीरधिरिति ॥ ८ ॥

इत्युक्तवन्तं कृपया महात्माऽप्यदापयत् सन्न्यसनं यथावत् ।
यं प्राहुरार्यं प्रथमं विनेयं श्रीदेशिकेन्द्रस्य सनन्दनाख्यम् ॥ ९ ॥

संसारघोरजलधेस्तरणाय शश्वत्तांयालिकीभवनमर्दयमानमेनम् ।
हन्तोत्तमाश्रमतरीमधिरोप्य पारं निन्ये निपातितकृपारसकेनिपातः ॥ १० ॥

येऽप्यन्येऽमुं सेवितुं देवतांशा यातास्तेऽपि प्राय एवं विरक्ताः ।
क्षेत्रे तस्मिन्नेव शिष्यत्वमस्य प्रापुः स्पष्टं लोकरीत्याऽपि गन्तुम् ॥ ११ ॥

## विश्वनाथानुग्रहः ।

एकदा दिवसमध्यमभागे शङ्करोऽम्बुजपरागकषायाम् ।
जाह्नवीमभिययौ सह शिष्यैः आह्निकं विधिवदेष चिकीर्षुः ॥ १२ ॥

मध्येमार्गं स चाद्राक्षीद् आरादायान्तमन्त्यजम् ।
वसानं कच्चरं वासो दधानं मूर्ध्नि वारुणीम् ॥ १३ ॥

धावतोऽग्रे विश्वकद्रून् बिभ्रतं चतुरः करे ।
अन्वीयमानं मातङ्ग्या दारकद्वययुक्तया ॥ १४ ॥

तथाविधं विलोक्याग्रे गच्छ गच्छेत्यशाद्यतिः ।
सोऽपि संस्कारवत्यैव वाचा प्रत्याह योगिनम् ॥ १५ ॥

अन्नमयादन्नमयं अथवा चैतन्यमेव चैतन्यात् ।
द्विजवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥ १६ ॥

गच्छ दूरमिति देहमुताहो देहिनं परिजिहीर्षसि विद्वन् ।
भिद्यतेऽन्नमयतोऽन्नमयं किं साक्षिणश्च यतिपुङ्गव साक्षी ॥ १७ ॥

किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चाण्डालवापीपयः-
पूरेऽप्यन्तरमस्ति काञ्चनघटीमृत्कुम्भयोश्चाम्बरे ।
प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ
विप्रोऽहं श्वपचोऽयमित्यपि महान् कोऽयं विभेदभ्रमः ॥ १८ ॥

शुचिर्द्विजोऽहं श्वपच व्रजेति मिथ्याग्रहस्ते मुनिवर्य कोऽयम् ।
सन्तं शरीरेष्वशरीरमेकं उपेत्य पूर्णं पुरुषं पुराणम् ॥ १९ ॥

अचिन्त्यमव्यक्तमनन्तमाद्यं विस्मृत्य रूपं विमलं विमोहात् ।
कलेवरेऽस्मिन् करिकर्णलोलाकृतिन्यहन्ता कथमाविरास्ते ॥ २० ॥

विद्यामवाप्यापि विमुक्तिपद्यां जागर्ति तुच्छा जनसङ्ग्रहेच्छा ।
अहो महान्तोऽपि महेन्द्रजाले मज्जन्ति मायाविवरस्य तस्य ॥ २१ ॥

इत्युदीर्य वचनं विरतेऽस्मिन् सत्यवाक् तदनु विप्रतिपन्नः ।
अत्युदारचरितोऽन्त्यजमेनं प्रत्युवाच स च विस्मितचेताः ॥ २२ ॥

सत्यमेव भवता यदिदानीं प्रत्यवादि तनुभृत्प्रवरैस्तत् ।
अन्त्यजोऽयमिति सम्प्रति बुद्धिं सन्त्यजामि वचसाऽऽत्मविदस्ते ॥ २३ ॥

जानते श्रुतिशिरांस्यपि सर्वे मन्वते च विजितेन्द्रियवर्गाः ।
युञ्जते हृदयमात्मनि नित्यं कुर्वते न धिषणामपभेदाम् ॥ २४ ॥

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृंभते
या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।
सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञापि यस्यास्ति चेत्
चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ २५ ॥

एवं वदन् स नाद्राक्षीत् यतिश्चाण्डालरूपिणम् ।
अदर्शच्च विशालाक्ष्या देव्या देवं पुरः स्थितम् ॥ २६ ॥

सेव्यमानं सुरगणैः स्तूयमानं महर्षिभिः ।
महाककुदि राजन्तं वृषे कैलाससन्निभे ॥ २७ ॥

सद्यः कृत्तिरभूद्वासः कच्चरं कृत्तिवाससः ।
श्वानस्त्वाम्नायरूपेण तस्य पार्श्वमुपाश्रिताः ॥ २८ ॥

सुरा सपदि गङ्गाऽऽसीद् गङ्गाधरजटातटे ।
दारकावपि संवृत्तौ गजाननषडाननौ ॥ २९ ॥

स्वपरीक्षार्थमायातं शम्भुं ज्ञात्वाऽन्त्यजात्मना ।
नत्वा स्तुत्वा चाह भूमन्ननुग्राह्यो ह्ययं जनः ॥ ३० ॥

देहदृष्ट्यास्मि दासस्ते जीवदृष्ट्यास्मि तेंशकः ।
तत्त्वदृष्ट्या त्वमेवास्मि यथेच्छमनुशाधि माम् ॥ ३१ ॥

सश्लाघमूचे भगवान् यते साधूदितं त्वया ।
सत्त्वदृष्ट्याऽहमेव त्वं तथापि श्रूयतामिदम् ॥ ३२ ॥

वेदो ब्रह्मपरः कृत्स्नो ब्रह्म चाखण्डमद्वयम् ।
तदन्यथैव व्याख्यातं कणादकपिलादिभिः ॥ ३३ ॥

संविभज्य सकलश्रुतिजालं ब्रह्मसूत्रमकरोदथ कृष्णः ।
यत्र काणभुजसांख्यपुरोगाण्युद्धृतानि कुमतानि समूलम् ॥ ३४ ॥

तत्र मूढमतयः कलिदोषाद् द्वित्रवेदवचनोद्वलितानि ।
भाष्यकाण्यरचयन्बहुबुद्धैः दूष्यतामुपगतानि च कैश्चित् ॥ ३५ ॥

तद्वत्त्वन्विदितवेदशिखार्थः तानि दुर्मतिमतानि निरस्य
सूत्रभाष्यमधुना विदधातु श्रुत्युपोद्बलितयुक्त्युपयुक्तम् ॥ ३६ ॥

मोहसन्तमसत्रासरनाथान् तत्र तत्र विनिवेश्य विनेयान् ।
पालनाय परतत्त्वसरण्याः मामुपैष्यसि ततः कृतकृत्यः ॥ ३७ ॥

एवमेनमनुगृह्य कृपावान् आगमैः सह शिवोऽन्तरधत्त ।
विस्मितेन मनसा सह शिष्यैः शंकरोऽपि सुरसिन्धुमयासीत् ॥ ३८ ॥

तत्समाप्य विधिमाह्निकमीशं ध्यायतो गुरुमथाखिलभाष्यम् ।
कर्तुमुद्यतमभूद्गुणसिन्धोः मानसं निखिललोकहिताय ॥ ३९ ॥

## बदर्यां गौडपादानुग्रहः । भाष्यप्रणयनम् ।

कर्तृत्वशक्तिमधिगम्य स विश्वनाथात् तीर्थानि सेवितुमनाः प्रययावुदीचीम् ।
काष्ठां क्षणेन बदरीं मुनिसङ्घजुष्टां सम्प्राप तत्र च दिनानि बहून्यवात्सीत् ॥४०॥

स द्वादशे वयसि तत्र समाधिनिष्ठैः ब्रह्मर्षिभिः श्रुतिशिरो बहुधा विचार्य ।
विद्वज्जनैर्बहुविधैरुपसेव्यमानो गोविन्ददेशिकमवाप यदृच्छयाऽत्र ॥ ४१ ॥

प्रणतं शङ्करं योगी प्राणैषीत्स्वगुरोः पदम् ।
गौडपादो महायोगी समाधौ यत्र तिष्ठति ॥ ४२ ॥

विवृण्वन्गौडपादस्य माहात्म्यं प्राह शङ्करम् ।
गुहायामास्त एकाकी गुरुर्मे लोकविश्रुतः ॥ ४३ ॥

द्विवारं वत्सरे योगी मादृशेषु दयान्वितः ।
उपदेष्टुं समागच्छेद्गुहायाश्च बहिस्स्थलम् ॥ ४४ ॥

दिनत्रयात्पूर्वमेव गुहां प्राप्तो गुरुर्मम ।
षण्मासेभ्यः परमयं समागच्छेद्बहिः स्वयम् ॥ ४५ ॥

तावद्वस त्वमत्रैव ततो द्रक्ष्यसि मे गुरुम् ।
एवं गोविन्दपादीयमादेशं प्राप्य शङ्करः ॥ ४६ ॥

कुर्वंस्तस्य च शुश्रूषां तापसैः सममावसत् ।
षण्मासेभ्यः परं गौडयोगी स बहिरागतः ॥ ४७ ॥

गोविन्दपादो विनतः प्रणमन् चरणाब्जयोः ।
न्यवेदयत्स्वशिष्यं तं शङ्करं गुरवे मुदा ॥ ४८ ॥

व्यासतात्पर्यभरितं श्रुतिशीर्षगदर्शनम् ।
उपादिशच्छङ्कराय गौडो गोविन्दचोदितः ॥ ४९ ॥

आदिष्टो गौडपादेन प्रस्थानत्रितये तदा ।
निर्ममे भाष्यरत्नौघं गुर्वोः प्रीतिं समावहन् ॥ ५० ॥

करतलकलिताद्वयात्मतत्त्वं क्षपितदुरन्तचिरन्तनप्रमोहम् ।
उपचितमृदितोदितैर्गुणौघैः उपनिषदामयमुज्जहार भाष्यम् ॥ ५१ ॥

ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरि ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश ॥ ५२ ॥

नृसिंहतापिनीश्वेताश्वतरोपनिषदौ तथा ।
एतासामकरोद्भाष्यं गम्भीरमतिविस्तृतम् ॥ ५३ ॥

पदभाष्यं वाक्यभाष्यं केनोपनिषदः पृथक् ।
चक्रे तथैव माण्डूक्योपनिषदः कारिकां तथा ॥ ५४ ॥

गौडपादैः पराचार्यैः कृतां भाष्यैररञ्जयत् ।
तत्रैतान् गौडचरणान् नमन्नित्थं जगौ मुदा ॥ ५५ ॥

प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं
भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे ।
कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतोः
यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि ॥ ५६ ॥

यत्प्रज्ञालोकभासा प्रतिहतिमगमत् स्वान्तमोहान्धकारः
मज्जोन्मज्जच्च घोरे ह्यसकृदुपजनोदन्वति त्रासने मे ।
यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्या ह्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये ॥ ५७ ॥

यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदान्ताः तान्नित्यं प्रणतोऽस्म्यहम् ॥ ५८ ॥

वेदान्तसूत्रवेश्मान्तर्वर्तमानार्थदृष्टये ।
श्रुतिप्रस्थान आचार्य एवं भाष्यप्रदीपिकाम् ॥ ५९ ॥

चक्रे तथा स्मृतीनां च प्रस्थाने भारतादथ ।
गीतां भागवतीं विष्णोर्नामसाहस्रकं तथा ।
सनत्सुजातीयं स्वैर्भाष्यैर्दीपयामास शङ्करः ॥ ६० ॥

आवर्त्याष्टादशधा समाहितः सूतसंहितां महिताम् ।
हितकाम्ययाभिहितवान् भाष्यं शरीरकं गुरुर्जगताम् ॥ ६१ ॥

एवं श्रुतिस्मृतिन्यायप्रस्थानत्रितयस्य च ।
भाष्यषोडशकेनावीत् गुरुर्वेदांश्च वैदिकान् ॥ ६२ ॥

शङ्करो दर्शयामास गुरू ग्रन्थसमुच्चयम् ।
गौडपादोऽभवत्प्रीतः प्रशिष्ये विनयोज्ज्वले ॥ ६३ ॥

लोकशङ्करणे शक्तं चिकीर्षुस्तं जगद्गुरुम् ।
त्रिकालविदलञ्चक्रे भगवत्पादसंज्ञया ॥ ६४ ॥

बदरीवासिनः सर्वे भगवत्पादयोगिनम् ।
शङ्कराचार्यनाम्ना च तुष्टुवुर्भक्तिपूर्वकम् ॥ ६५ ॥

सर्वदिग्व्याप्तभाष्यांशुः श्रीशङ्करदिवाकरः ।
तिरश्चक्रेऽखिलं लोके प्रतिवादितमोगुणम् ॥ ६६ ॥

व्यासो दर्शयति स्म सूत्रकलितन्यायौघरत्नावलीः
अर्थालाभवशात् न कैरपि बुधैरेता गृहीताश्चिरम् ।
अर्थाप्त्या सुलभाभिराभिरधुना ते मण्डिताः पण्डिताः
व्यासश्चाप कृतार्थतां यतिपतेरौदार्यमाश्चर्यकृत् ॥ ६७ ॥

ब्रह्मर्षयो ये तत्रासन् ब्रह्मविद्याविशारदाः ।
निर्मत्सराः सुनिपुणाः गुणागुणविवेचने ॥ ६८ ॥

ते सर्वे च सभां कृत्वा प्रेक्ष्य तद्भाष्यमान्ततः ।
हर्षगद्गदया वाचा सुश्लाघमिदमूचिरे ॥ ६९ ॥

अहो भाष्यमहो भाष्यं अहो अद्वैतभाष्यकृत् ।
क्व नु षोडशवर्षोऽयं क्व चेदं भाष्यमुत्तमम् ॥ ७० ॥

अथ वा नाद्भुतमिदं सर्वज्ञेऽस्मिन्सदाशिवे ।
इदं श्रुत्यन्तनिष्यन्दो मुमुक्षूणामिदं धनम् ॥ ७१ ॥

अद्यैव सफलोद्योगो भगवान् बादरायणः ।
इति प्रशंसितगुणो गुणगृह्यैर्महात्मभिः ।
भूतार्थशंसनपरैः विज्ञैः रेजे यतीश्वरः ॥ ७२ ॥

अथ व्रतीन्दुर्विधिवद्विनेयान् अध्यापयामास स नैजभाष्यम् ।
तर्कैः परेषां तरुणैर्विवस्वन्मरीचिभिः- सिन्धुवदप्रशोष्यम् ॥ ७३ ॥

निजशिष्यहृदब्जभास्वतो गुरुवर्यस्य सनन्दनादयः ।
शमपूर्वगुणैरथाश्नुवन् कतिचिच्छिष्यगणेषु मुख्यताम् ॥ ७४ ॥

स नितरामितराश्रवतो लसन्नियममद्भुतमाप्य सनन्दनः ।
श्रुतनिजश्रुतिकोऽप्यभवत्पुनः पिपठिषुर्गहनार्थविवित्सया ॥ ७५ ॥

अद्वन्द्वभक्तिममुमात्मपदारविन्दद्वन्द्वे नितान्तदयमानमना मुनीन्द्रः ।
आम्नायशेखररहस्यनिधानकोशं आत्मीयकोशमखिलं त्रिरपाठयत्तम् ॥७६॥

स चान्तेवासिषु श्रैष्ठ्यं गुरुभक्त्याऽऽनशे क्रमात् ।
सर्वलोकसमस्यापि भजमानेष्वनुग्रहः ॥ ७७ ॥

स्वभावो नात्र वैषम्यं ईश्वरस्येव सद्गुरोः ।
इति तत्त्वमविज्ञाय छात्रेष्वन्येष्वसूयुषु ॥ ७८ ॥

अन्यादृशीं तस्य भक्तिं प्रचिख्यापयिषुर्गुरुः ।
गङ्गायास्त्वपरे पारे तिष्ठन्तं स सनन्दनम् ॥ ७९ ॥

शीघ्रमेहीत्याजुहाव सर्वेषामपि पश्यताम् ।
तथाऽऽहूतः स गुरुणा स्रोतस्विन्या अगाधताम् ॥ ८० ॥

अनादृत्यर्जुमार्गेण गन्तुं गुर्वन्तिकं जवात् ।
अन्वातरज्जले सद्यः तद्भक्त्या सापि निम्नगा ॥ ८१ ॥

पादन्यासेषु विन्यस्य पद्मं पद्ममधात्पदम् ।
स च सत्वरमभ्येत्य तीरं गुर्वन्तिके स्थितः ॥ ८२ ॥

आसन्नपल्वलपानमग्नाः सर्वेऽपि तदसूयकाः ।
ततः प्रभृति तं प्राहुः पद्मपादं विपश्चितः ॥ ८३ ॥

व्यासब्रह्मानुग्रहः ।

स जातु शारीरकसूत्रभाष्यमध्यापयन्नभ्रसरित्समीपे ।
शिष्यालिशङ्काः शमयन्नुवास यावन्नभोमध्यमितो विवस्वान् ॥ ८४ ॥

श्रान्तेष्वथाधीत्य शनैर्विनेयेष्वाचार्य उत्तिष्ठति यावदेषः ।
तावद् द्विजः कश्चन वृद्धरूपः कस्त्वं किमध्यापयसीत्यपृच्छत् ॥ ८५ ॥

शिष्यास्तमूचुर्भगवानसौ नो गुरुः समस्तोपनिषत्स्वतन्त्रः ।
अनेन दूरीकृतभेदवादमकारि शारीरकसूत्रभाष्यम् ॥ ८६ ॥

स चाब्रवीद्भाष्यकृतं भवन्तं एते वदन्त्यद्भुतमेतदास्ताम् ।
अथैकमुच्चारय पारमर्षं यतेऽर्थतस्त्वं यदि वेत्थ सूत्रम् ॥ ८७ ॥

तमब्रवीद्भाष्यकृदग्रयवाचं सूत्रार्थविद्भ्योऽस्तु नमो गुरुभ्यः ।
सूत्रज्ञताऽहंकृतिरस्ति नो मे तथाऽपि यत्पृच्छसि तद्ब्रवीमि ॥ ८८ ॥

पप्रच्छ सोऽध्यायमथाधिकृत्य तृतीयमारम्भगतं यतीशम् ।
तदन्तरेत्यादिकमस्ति सूत्रं ब्रूह्येतदर्थं यदि वेत्थ किञ्चित् ॥ ८९ ॥

तयोक्तमर्थं निशमय्य तेन स वावदूकः शतधा विकल्प्य ।
अखण्डयत् पण्डितकुञ्जराणां मध्ये महाविस्मयमादधानः ॥ ९० ॥

अनूद्य सर्वं फणितं तदीयं सहस्रधा तीर्थकरश्चखण्ड ।
तयोः सुराचार्यफणीन्द्रवाचोः दिनाष्टकं वाक्कलहो जजृम्भे ॥ ९१ ॥

तदन्तरे तु मतिमान् पद्मपादो व्यचिन्तयत् ।
अयं न विप्रो यः कश्चित्कृष्णद्वैपायनो ध्रुवम् ॥ ९२ ॥

नान्योऽभियोक्तुमीष्टेऽस्मद्गुरुं सिंहं यथा मृगः ।
मन्ये ह्यनेन भाष्येण प्रीणितो बादरायणः ॥ ९३ ॥

इति मत्वा कुशाग्रीयमतिः तौ प्रणमन् जगौ ।
शङ्करः शङ्करः साक्षात् व्यासो नारायणः स्वयम् ॥ ९४ ॥

तयोर्विवादे सम्प्राप्ते किंकरः किं करोम्यहम् ।
इति सूचिततत्त्वार्थो भाष्यकारः ससंभ्रमम् ॥ ९५ ॥

नमो भगवते सूत्रकारायेति ननाम तम् ।
कृताञ्जलिस्तं प्रयत उपतस्थे सपर्यया ॥ ९६ ॥

भावत्कसूत्रप्रतिपाद्यतादृक्परापरार्थप्रतिपादकं सत् ।
अद्वैतभाष्यं तव संमतं चेत् सोढ्वा ममागः पुरतो भवाशु ॥ ९७ ॥

एवं वदन्नयमथैक्षत कृष्णमारात् चामीकरव्रततिचारुजटाकलापम् ।
विद्युल्लतावलयवेष्टितवारिदाभं चिन्मुद्रया प्रकटयन्तमभीष्टमर्थम् ॥ ९८ ॥

शार्दूलचर्मोद्वहनेन भूतेरुद्धूलनेनापि जटाच्छटाभिः ।
रुद्राक्षमालावलयेन शम्भोरर्धासनाध्यासनसख्यपात्रम् ॥ ९९ ॥

अत्यादराच्छात्रगणैः सहासौ प्रत्युद्गतस्तच्चरणौ प्रणम्य ।
यत्यग्रगामी विनयी प्रहृष्यन्नित्यब्रवीत् सत्यवतीसुतं सः ॥ १०० ॥

धत्से सदाऽऽर्तिशमनाय हृदा गिरीशं
गोपायसेऽधिवदनं च चिरन्तनीर्गाः ।
दूरीकरोपि नरकं च दयार्द्रदृष्ट्या
कस्ते गुणान् गदितुमद्भुतकृष्ण शक्तः ॥ १०१ ॥

लोकाननुजिघृक्षुस्त्वं लोके सञ्चरसि ध्रुवम् ।
पूर्णकामाः किमन्यस्मादभिवाञ्छन्ति पूरुषाः ॥ १०२ ॥

तथाऽप्यागमने हेतुं तव पृच्छामि कौतुकात् ।
इत्युक्तो यतिवर्येण शङ्करेण महात्मना ॥ १०३ ॥

प्रत्युवाचातिहृष्टात्मा महर्षिर्बादरायणः ।
वेदान्तागमसूत्राणां रचितानां महामते ॥ १०४ ॥

त्वया भाष्यं व्यधायीति श्रुत्वाऽऽयातोऽस्मि सांप्रतम् ।
तद्द्रष्टुं कौतुकेनालं त्वरते मम मानसम् ॥ १०५ ॥

इत्थं मुनीन्द्रवचनश्रवणोत्थहर्षं रोमाञ्चपूरमिषतो बहिरुत्प्लवन्तम् ।
बिभ्रत् तमभ्ररुचिमाख्यददभ्रशक्ति श्रीशङ्करःशुकमतार्णवपूर्णचन्द्रः॥१०६॥

सुमन्तुपैलप्रथमा मुनीन्द्रा महानुभावा ननु यस्य शिष्याः ।
तृणाल्लघीयानपि तत्र कोऽहं तथापि कारुण्यमदर्शि दीने ॥ १०७ ॥

सोऽहं समस्तार्थविवेचकस्य कृत्वा भवत्सत्रसहस्ररश्मेः ।
भाष्यप्रदीपेन महर्षिमान्य नीराजनं धृष्टतया न लज्जे ॥ १०८ ॥

अकारि यत्साहसमात्मबुद्ध्या भवत्प्रशिष्यव्यपदेशभाजा ।
विचार्य तत्सूक्तिदुरुक्तिजालमर्हः समीकर्तुमिदं कृपालुः ॥ १०९ ॥

भाष्यं तदुक्त्वाऽर्पिपदस्य हस्ते हस्तद्वयेनादरतो विनीतः ।
आदाय सर्वत्र निरैक्षतासौ प्रसादगांभीर्यगुणाभिरामम् ॥ ११० ॥

सूत्रानुकारिमृदुवाक्यनिवेदितार्थैं स्वीयैः पदैः सह निराकृतपूर्वपक्षम् ।
सिद्धान्तयुक्तिविनिवेशिततत्त्वरूपं दृष्ट्वाऽभिनन्द्य परितोषवशादवोचत् ॥

न साहसं तात भवानकार्षीत् यत्सूत्रभाष्यं गुरुणा विनीतः ।
विनिःसरेत्ते वदनाद्यतीन्दो गोविन्दशिष्यस्य कथं दुरुक्तम् ॥ ११२ ॥

वह्वर्थगर्भाणि लघूनि यानि निगूढभावानि च मद्वचांसि ।
त्वामेवमित्थं विरहय्य नास्ति यस्तानि सम्यग् विवरीतुमीष्टे ॥ ११३ ॥

व्याख्या हि भूयो निगमान्तविद्यां विभेदवादान् विदुषो विजित्य ।
ग्रन्थान्भुवि ख्यापय सानुबन्धान् अहं गमिष्यामि यथाभिलाषम् ॥११४॥

एवमुक्त्वा तु यास्यामीत्युच्चरन्तं मुनीश्वरम् ।
नत्वेदमाह सर्वज्ञ भदन्तोऽद्य भविष्यति ॥ ११५ ॥

प्राणोत्क्रममवेक्ष्याद्य यास्यसि त्वं दयानिधे ।
त्वत्पादसन्निधेर्योगात् मुक्त एवाहमद्वयः ॥ ११६ ॥

इत्युक्तः शङ्कराचार्यमिदमाह घृणान्वितः ।
कथं प्रवृत्तिर्भाष्यस्य गते त्वयि जगत्यलम् ॥ ११७ ॥

तस्मादद्वैतबोधाय स्थिरो भव परावरे ।
आज्ञप्तोऽप्येवमाचार्यः पुनराह मुनीश्वरम् ॥ ११८ ॥

शरत्सु षोडशस्वेव मदायुस्थितिरित्यतः ।
व्यासस्त्वाकर्षयामास ब्रह्माणं सृष्टिकारणम् ॥ ११९ ॥

ब्रह्माऽप्यवादीदेवं हि स्वतन्त्रः शङ्करः प्रभुः ।
यावदिच्छाब्दमुर्व्यां हि स्थित्वा पश्चाद् गमिष्यति ॥ १२० ॥

इत्युक्त्वान्तर्दधे ब्रह्मा व्यासश्च भगवान्मुनिः ।
ततो मुमुदिरे सर्वेऽप्यायुर्वृद्ध्या महागुरोः ॥ १२१ ॥

अम्भोजसंभवपराशरपुत्रदत्तस्वायुर्विशेषदुरपोहहरिज्जयेच्छुः ।
प्रक्रान्तवान् दिशि विदिश्यतिवीरवादः अद्वैतमेव परिवर्धयितुं बुधेषु॥१२२॥

॥ इति श्रीशङ्करविजयमकरन्दे पञ्चम आस्वादः समाप्तः ॥

## ॥ षष्ठ आस्वादः ॥

### शिष्यसंग्रहःबदरीनारायणप्रतिष्ठा

अथ श्रीशङ्कराचार्यो निवसन् बदरीवने ।
शिष्यानध्यापयामास पद्मपादमुखान्गुरुः ॥ १ ॥

सुप्रसन्नतरं भाष्यं ते च सम्यग्विचक्षणाः ।
तथाऽप्यतिगभीरत्वात्तस्य गङ्गाप्रवाहवत् ॥ २ ॥

उत्सुकत्वाच्च तत्सारं पातुं गुरुमुखांबुजात् ।
रसस्यायातयामत्वात् स्वाद्यत्वाच्च नवं नवम् ॥ ३ ॥

शृण्वतामपि शुश्रूषा जाता तेषामतृप्यताम् ।
भूरिवात्सल्यवान् सोऽपि मुहुस्तानध्यजीगपत् ॥ ४ ॥

### चित्सुखस्य शिष्यतया स्वीकारः ।

कालटीसंभवः कश्चिद्विष्णुशर्माभिधो वटुः ।
सहाध्यायी शङ्करस्य स्निग्धोऽनुज इवाभवत् ॥ ५ ॥

निर्विण्णो लौकिकेष्वर्थेष्वन्विष्यन्गुरुमात्मनः ।
आगतो बदरीं शिष्यान् बोधयन्तं स शङ्करम् ॥ ६ ॥

पश्यन् लब्धं गुरुं मेने चिरादीप्सितमादरात् ।
नमन् स्तुवन् विष्णुशर्मा गुरोः पादावुपाग्रहीत् ।
प्रार्थयामास शिष्यत्वेनात्मनो ग्रहणं मुहुः ॥ ७ ॥

एवं संप्रार्थितो युक्तं विदित्वा शङ्करोऽञ्जसा ।
विरक्तं चक्षुषा दिव्येनापश्यत् करुणावता ॥ ८ ॥

दत्वा श्रीचित्सुखाभिख्यां तस्मै देशिकपुङ्गवः ।
यतिं चकार विधिना महावाक्यान्युपादिशत् ॥ ९ ॥

## तप्तकुण्डोत्पत्तिः ।

तत्रातिशीतार्दितदेशिकस्य संरक्षणायातुलितप्रभावः ।
तप्तोदकं प्रार्थयते स्म चन्द्रकलाधरात्तीर्थकरप्रधानः ॥ १० ॥

कर्मन्दिवृन्दपतिना गिरिशोऽर्थितः सन्
सन्तप्तवारिलहरीं स्वपदारविन्दात् ।
प्रावर्तयत् प्रथयती यतिनाथकीर्तिं
याऽद्यापि तत्र समुदञ्चति तप्ततोया ॥ ११ ॥

## बदरीनाथप्रतिष्ठा ।

एवं गुरुं पर्यचरत्स भक्त्या शिष्यैः समेतो यतिसार्वभौमः ।
तत्र स्थितः कान्यपि वासराणि स्वप्ने हरिं प्रैक्षत सुप्रसन्नम् ॥ १२ ॥

मूर्तिर्मदीया सलिलेऽत्र मग्नास्त्युद्धृत्य तां संपरिपूजयेति ।
तदुक्तिमाकर्ण्य तथा विधाय नारायणं तं समपूजयच्च ॥ १३ ॥

अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् ।
भूतदयां विस्तारय तारय संसारसागरतः ॥ १४ ॥

नारायण करुणामय शरणं करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥ १५ ॥

तस्यालयं कारयितुं पूजां कर्तुं च नित्यशः ।
यदा स चिन्तयन्नास्त कालट्या आगमत्तदा ॥ १६ ॥

अग्निशर्माभिधो मात्रा प्रेषितस्तद्दिदृक्षया ।
आर्यांबा स्वं धनं पूर्णं तस्य हस्ते निधाय च ॥ १७ ॥

तमन्वयुंक्त व्ययितुं शंकरोद्दिष्टवर्त्मना ।
ववन्दे शंकरं पूर्णतेजस्कं प्रयतो वटुः ॥ १८ ॥

न्यवेदयज्जराजीर्णां मातरं तं दिदृक्षतीम् ।
धनं च भूरि तद्दत्तं आर्पिपत्पदयोर्गुरोः ॥ १९ ॥

शंकरः कारयामास तद्धनेनालयं हरेः ।
न्ययुंक्त चाग्निशर्माणं नियतं पूजने हरेः ॥ २० ॥

अद्यापि देवं नियमेन तस्मात्समागतः केरलनामदेशात् ।
पौर्वाश्रमः स्वो जन एव चास्य तदा तदा पूजयति प्रसिद्धम् ॥ २१ ॥

तदालयं कारयितुं पद्मपादं समादिशत् ।
गुरोरनुज्ञां शिरसा वहन् स निरमापयत् ॥ २२ ॥

## मातुः निर्याणम् ।

अत्रान्तरेऽपि जननी जरती तदीया
सस्मार शङ्करपदं निकटस्थमृत्युः ।
तच्छङ्करो विदितवान् युयुजे विविक्ते
सोऽन्तर्दधे गगनमण्डलमाससाद ॥ २३ ॥

योगेन गच्छन् स मुहूर्तमात्रात् अवातरत्केरलभूविशेषे ।
तद्देशबुद्ध्या पुनरीक्षमाणः स्वां कालटीं जन्मभुवं प्रपेदे ॥ २४ ॥

४

तत्रातुरां मातरमैक्षतासौ ननाम तस्याश्चरणौ महात्मा ।
साचैनमुद्वीक्ष्य शरीरतापं जहौ निदाघार्तिमिवाम्बुदेन ॥ २५ ॥

दृष्ट्वा चिरात्पुत्रमनामयं सा हृष्टान्तरात्मा निजगाद मन्दम् ।
अस्यां दशायां कुशली मया त्वं दिष्ट्यासि दृष्टः किमतोऽस्ति कृत्यम् ॥ २६ ॥

इतः परं पुत्रक गात्रमेतत् वोढुं न शक्नोमि जरातिशीर्णम् ।
संस्कृत्य शास्त्रोदितवर्त्मना त्वं सद्वृत्त मां प्रापय पुण्यलोकान् ॥ २७ ॥

सुतानुगां सूक्तिमिमां जनन्याः श्रुत्वाऽथ तस्यै सुखरूपमेकम् ।
मायामयाशेषविशेषशून्यं मानातिगं स्वप्रभमप्रमेयम् ॥ २८ ॥

उपादिशद्ब्रह्म परं सनातनं न यत्र हस्ताङ्घ्रिविभागकल्पना ।
अन्तर्बहिः संनिहितं यथाम्बरं निरामयं जन्मजरादिवर्जितम् ॥ २९ ॥

तत्रोपदिष्टे न विवेद किञ्चित् माताऽवदच्छङ्कर न क्षमेऽहम् ।
त्वयोदितं वेदितुमन्यदेव वदेति तच्छङ्कर आप चिन्ताम् ॥ ३० ॥

अन्त्यकालस्मृतिं तस्याः शिवे ब्रह्मणि निश्चलाम् ।
विधातुकामो मृत्योश्चाभीतिं प्रार्थयतेश्वरम् ॥ ३१ ॥

यदा दारुणाभाषणा भीषणा मे भविष्यन्त्युपान्ते कृतान्तस्य दूताः ।
तदा मन्मनस्त्वत्पदांभोरुहस्थं कथं निश्चलं स्यान्नमस्तेऽस्तु शंभो ॥३२॥

इदानीमिदानीं मृतिर्मे भवित्रीत्यहो सन्ततं चिन्तया पीडिताऽस्मि ।
कथं नाम माभून्मृतौ भीतिरेषा नमस्ते गतीनां गते नीलकण्ठ ॥ ३३ ॥

एवं स्तुवति मात्रर्थे शङ्करे गतमृत्युभीः ।
माता गृहीत्वा तं हस्तेऽवोचद्गद्गदितस्वरा ॥ ३४ ॥

वत्स त्वज्जनकं प्रापं धन्या त्वां तनयं तथा ।
वृषाचलेशितुः शम्भोः करुणापाङ्गवीक्षणात् ॥ ३५ ॥

मृते भर्तरि तद्दुःखं व्यस्मार्षं तव दर्शनात् ।
उपनीते गुरुकुलं गते त्वद्विरहातुरा ॥ ३६ ॥

अनैषं दिवसान् दुःखात् तवागमनकांक्षया ।
गृहीतपादो नक्रेण वत्स सन्न्यस्तवान् यदा ॥ ३७ ॥

अचक्षुरभवं मूका स्तब्धसर्वाङ्गचेष्टिता ।
नापश्यं नारुदं नैवाकार्यं किञ्चिदपि स्वयम् ॥ ३८ ॥

नैवाविदमहोरात्रं कदाचित्त्वागतस्मृतिः ।
क्रमाद्विदितवृत्ताहमरुदं त्वददर्शनात् ॥ ३९ ॥

तदा जाता घृणा काचिदस्थाने परमेश्वरे ।
रुद्रः करालो भूताभिषङ्गी निष्करुणः स्वतः ॥ ४० ॥

दत्तापहारी तं त्वां च दत्त्वा मह्यं स्वतो मुदा ।
युवयोर्वैभवज्ञानात्प्रागेवापाहरद्यतः ॥ ४१ ॥

मनोरथान् समुद्दीप्य नैव पूर्णांश्चकार तान् ।
नापारयमपाक्रष्टुं भावं तमशुभं हृदः ॥ ४२ ॥

स्मरद्भिर्नाम माहेशं भक्त्योच्चैः समुदाहृतम ।
शिव शम्भो शङ्करेति युवयोः स्मरणप्रदम् ॥ ४३ ॥

श्रोतुं नाशक्नुवं कर्णौ पिदधे जातसाध्वसा ।
तदादि वन्दनं ध्यानं श्रवणं स्मरणं प्रभोः ॥ ४४ ॥

अर्चां च त्यक्तवत्यासं बलात् त्वद्विरहातुरा ।
क्रमात् विवेकहसिता दुर्भावाः परमेश्वरे ॥ ४५ ॥

वृषाचलेशं मनसा ध्यायन्ती तद्दिदृक्षया ।
तं देशं नाशकं गन्तुं जराजीर्णकृशाङ्गका ॥ ४६ ॥

स्वप्ने मामादिशच्छम्भुः गन्तु गेहान्तिकस्थितम् ।
वल्गद्रौप्यमृगोद्दिष्टं स्वं धाम परमाद्भुतम् ॥ ४७ ॥

तदादेशेन तत्रस्थमुपातिष्ठे गतक्लमा ।
शक्तिः क्रमेण जहास गन्तुं तं देशमप्युत ॥ ४८ ॥

अपेक्षमाणान्यं कञ्चिदालम्बं तं गृहान्तगम् ।
गोविन्दं शरणं प्रापं तद्ध्यानाधूतवेदना ॥ ४९ ॥

स एव मेऽद्य हृदये तिष्ठत्यद्भुतविग्रहः ।
प्रार्थयस्व तमेवाद्य कीर्तयात्र तमेव भोः ॥ ५० ॥

इत्थं सकरुणं भाववशयोदीरितं वचः ।
श्रुत्वा मातुः प्रियतरं अस्तौदच्युतमव्ययम् ॥ ५१ ॥

कफव्याहतोष्णोल्बणश्वासवेगव्यथाविस्फुरत्सर्वमर्मास्थिबन्धाम् ।
विचिन्त्याहमन्त्यामसंख्यामवस्थां बिभेमि प्रभो किं करोमि प्रसीद ॥ ५२ ॥

लपन्नच्युतानन्त गोविन्द विष्णो मुरारे हरे नाथ नारायणेति ।
यथाऽनुस्मरिष्यामि भक्त्या भवन्तं तथा मे दयाशील देव प्रसीद ॥ ५३ ॥

शृण्वन्ती तां स्तुतिं प्राह शङ्करं शान्तचेतसा ।
न मे भीर्मरणे, चिन्ता तवार्थे वा जितात्मनः ॥ ५४ ॥

अपि स्मरसि गोविन्दाष्टकं तन्मन्मनोहरम् ।
बाल्ये गीतं त्वया भक्त्या कुतुकात्कृष्णसन्निधौ ॥ ५५ ॥

तद्गायस्वाद्य मे प्राणान्मुमुक्षोर्हृद्रसायनम् ।
श्रुत्वा मातुः प्रियतमं तदगायन्मुदान्वितः ॥ ५६ ॥

सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं
गोष्ठप्रांगणरिंखणलोलमनायासं परमायासम् ।
मायाकल्पितनानाकारमनाकारं भुवनाकारं
क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ ५७ ॥

स्तुतिमेनां श्रुतवती बभूवानन्दनिर्भरा ।
स्मरणादेव कृष्णस्य शाश्वतीं शान्तिमन्वभूत् ॥ ५८ ॥

चित्ते दधार तं कृष्णमम्बुजाक्षं सुनिर्मले ।
धारणा श्लथितेवाभूत् तदा प्राग्वासनाबलात् ॥ ५९ ॥

गायन्तं शङ्करं प्राह धारणादार्ढ्यवाञ्छया ।
अपि स्मरेयं गोविन्दं पूर्णभावेन मुक्तिदम् ॥ ६० ॥

अपि वा वासना दुष्टा मोहयेन्मामसूद्गमे ।
वद कश्चिदुपायं मे यथा स्याद्धारणा दृढा ॥ ६१ ॥

तमेव सर्वभावेन गच्छेयं शरणं हृदा ।
मातरं विह्वलां दृष्ट्वा सान्त्वयामास शङ्करः ॥ ६२ ॥

अंब माभैर्यथा चिन्ता न व्यपेयान्मुकुन्दतः ।
कृष्णस्य दर्शनं साक्षात्संभवेत् स्मृतिदार्ढ्यदम ॥ ६३ ॥

तथा कृष्णमुपस्थास्ये मातस्तव कृपाबलात् ।
अथ संचिन्तयन्देवमुपस्थे यदूद्वहम् ॥ ६४ ॥

श्रियाश्लिष्टं शरण्यं तं चराचरगुरुं हरिम् ।
विषयीभवितुं मातुश्चक्षुषोर्मातृवत्सलः ॥ ६५ ॥

श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयः
धियां साक्षी शुद्धो हरिरसुरहन्ताऽब्जनयनः ।
गदी शङ्खी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशस्तव भवतु कृष्णोऽक्षिविषयः ॥ ६६ ॥

इति हरिरखिलात्माऽऽराधितः शङ्करेण
श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः ।
यतिवरनिकटे श्रीमुक्त आविर्बभूव
स्वगणवृत उदारः शङ्खचक्राब्जहस्तः ॥ ६७ ॥

पश्यन्ती मुरजिद्रूपं यथा शङ्करवर्णितम् ।
मृतिकाले समासन्ने श्रीकृष्णचरणाब्जयोः ॥ ६८ ॥

लीनचित्ता जहौ प्राणान्निर्वृतोदारदर्शना ।
योगिगम्यं पदं प्राप माता यतिवरस्य सा ॥ ६९ ॥

संस्कर्तुकामो जननीं सनाभीन् जुहाव नायन् किल दुर्विदग्धाः ।
ततो हुताशं प्रतिगेहमार्दत् तं चापि नास्मै विततार कश्चित् ॥ ७० ॥

निर्मथ्य वाहुमचिराद्दक्षिणमग्निं ततः समाहृत्य ।
कर्म यथावद्यताचक्रे मातुर्जगद्गुरुः स्वस्य ॥ ७१ ॥

यथाप्रतिश्रुतं मातुश्चरमां संस्कृतिं गुरुः ।
सन्निधाय स्वयं कुर्वन् दध्यौ मातरमात्मवान् ॥ ७२ ॥

आस्तां तावदियं प्रसूतिसमये दुर्वारशूलव्यथा
नैरुच्यंतनुशोषणं मलमयी शय्या च सांवत्सरी ।
एकस्यापि न गर्भभारभरणक्लेशस्य यस्याः क्षमः
दातुं निष्कृतिमुन्नतोऽपि तनयस्तस्यै जनन्यै नमः ॥ ७३ ॥

यतिसमुचितवेषं स्वप्नकाले तु दृष्ट्वा
गुरुकुलमुपसृत्य प्रारुदो मां त्वमुच्चैः ।
गुरुकुलमथ सर्वं प्रारुदत्ते समक्षं
सपदि चरणयोस्ते मातरस्तु प्रणामः ॥ ७४ ॥

अंबेति तातेति शिवेति तस्मिन्प्र-
सूतिकाले यदवोच उच्चैः ।
कृष्णेति गोविन्द हरे मुकुन्देत्यन्ते
जनन्यै रचितोऽयमञ्जलिः ॥ ७५ ॥

ध्यायन्नेवं स्वजननीं निर्जगाम सा निर्ममः ।
गुरोश्चरणसेवायै प्रतस्थे बदरीं प्रति ॥ ७६ ॥

वीक्ष्य तद्दुष्करं कर्म शङ्करस्य यतीशितुः ।
आत्मानं मेनिरे विप्राः दग्धान्दौश्शील्यवह्निना ॥ ७७ ॥

न विप्रत्वं न बन्धुत्व ग्रामगैस्तैः पुरस्कृतम् ।
यत्तेऽर्थिता नादुरग्निं नोपाकुर्वंश्च संस्कृतौ ॥ ७८ ॥

तदादि तद्देशभवा न वेदमधीयते नो यमिनां च भिक्षा ।
महत्सु धीपूर्वकृतापराधो भवेत्पुनः कस्य सुखाय लोके ॥ ७९ ॥

देशे समागतममुं कलयन् महान्तं द्राक्
राजशेखरनृपः सविधं समेत्य ।
तं प्राणमद् गुरुरथैष तमप्यपृच्छत् किं
नाटकत्रयमिह प्रथते भुवीति ॥ ८० ॥

स्वामिन् गतं तदनले बत मे प्रमादात्
इत्युक्तवांस्तदनु कारुणिकः सुमेधाः ।
स्मृत्वा तदैव तदलीलिखदेष चित्रं
यच्छ्रावितं नृपतिना सकृदेव बाल्ये ॥ ८१ ॥

॥ इति श्रीशङ्करविजयमकरन्दसारे षष्ठ आस्वादः समाप्तः ॥

## ॥ सप्तम आस्वादः ॥

### गोविन्दभगवत्पादानां ब्रह्मीभावः ।

अपि हालनृपालपालितं द्रागपहायेन्द्रहरिन्मुखं वितन्द्रम् ।
श्रितमुर्मुरमुद्गरं त्रिवेण्यां यतिराड् भद्रमघानि वो वितृण्यात् ॥ १ ॥

कालटीं प्रस्थिते तस्मिन् गुरुर्गोविन्दसंयमी ।
आम्रकूटं ययौ रेवातीरगं शिष्यसंवृतः ॥ २ ॥

शङ्करः संगतस्तत्र गुरुशुश्रूषणे रतः ।
तुरीयाश्रमधर्मांश्चाधिजगे गोविन्दयोगितः ॥ ३ ॥

कदाचित्प्रवया वृद्धो गुरुर्गोविन्दसंयमी ।
शिष्यानाकारयामास सर्वाननुशशास च ॥ ४ ॥

कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहम् ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥ ५ ॥

पवित्रं स्नानशाटीं तु चोत्तरासङ्गदण्डके ।
अतोऽतिरिक्तं यत्किञ्चित् सर्वं तद्वर्जयेद्यतिः ॥ ६ ॥

नदीपुलिनशायी स्यात् देवागारेषु वाह्यतः ।
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥ ७ ॥

स्नानं ध्यानं तथा शौचं अद्भिः पूताभिराचरेत् ।
स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ॥ ८ ॥

हिरण्यानि च पात्राणि कृष्णायसमयानि च ।
यतीनां तोयपात्राणि वर्जयेत्तानि भिक्षुकः ॥ ९ ॥

भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्चनम् ।
कर्तव्यानि षडेतानि सर्वदा नृपदण्डवत् ॥ १० ॥

इत्थं प्रशास्य प्रवयाः स्वशिष्यान् शङ्करानुगान् ।
नियोज्य शङ्कराचार्यं अद्वैतस्थापने गुरुः ॥ ११ ॥

सोऽहमस्मीति निश्चित्य विसृज्येतरकांक्षितान् ।
ओमित्येकाक्षरं ब्रह्म ध्यायन्नन्तः परं शिवम् ॥ १२ ॥

शास्त्रश्रुत्यङ्गनेत्राब्दे युधिष्ठिरशकस्य वै ।
प्लवङ्गे कार्तिके मासि पूर्णिमायां गुरोर्दिने ॥ १३ ॥

श्रीमद्गौडपदाचार्यशिष्यो योगविदां वरः ।
गोविन्दभगवत्पादः सिद्धिं प्राप स संयमी ॥ १४ ॥

गोविन्दस्य व्रतिकुलगुरोः सिद्धिमाकर्ण्य कृत्वा
यत्कर्तव्यं तदपि वररुच्यादयो भ्रातरस्ते ।
स्वे स्वे कर्मण्यविहतधियो विद्यया कीर्तिमन्तः
चत्वारोऽपि स्थितिमभिमतामुज्जयिन्यामकुर्वन् ॥ १५ ॥

## कुमारिलभट्टपादसमागमः ।

पृथ्वीं पृथ्वीं पर्यटन् भाष्यकारः स्वेच्छाचारी शिष्यसंघैः परीतः ।
भाष्यं भूष्यं सन्दधानः स्वहस्ते तीर्थं प्रापत्तीर्थिकस्तीर्थमूर्तिः ॥ १६ ॥

कलिन्दपुत्र्याः सजलाभ्रकान्त्याः क्षीरामया जह्नुतनूजया च ।
यत्राभवत्संगतिरल्पपुण्यैः सुदुर्लभा मुक्तिपदं जनानाम् ॥ १७ ॥

ब्रह्मादयोऽप्यमितसंप्रतिपादशक्त्या यत्रायजन्त पुरुषार्थविशेषसिद्धयै ।
अद्यापि यत्र यजनं प्रशस्तं यस्य प्रयाग इति नाम बभूव लोके ॥ १८ ॥

यथावद्विहितस्नानो यमुनायास्तटे शुभे ।
गोविन्दचरणास्वादचणां प्रार्थयताथ ताम् ॥ १९ ॥

मुरारिकायकालिमाललामवारिधारिणी
तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी ।
मनोऽनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ २० ॥

विधूततापो यमुनामवगाह्य भवापहाम् ।
भागीरथीं शम्भुजटानिर्गतामाप संयमी ॥ २१ ॥

जाह्नवीं सरितां श्रेष्ठां यमुनासंगमेच्छया ।
आगच्छन्तीं जवाच्छुभ्रां ननाम प्रयतो गुरुः ॥ २२ ॥

ब्रह्माण्डं खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती
स्वर्लोकादापतन्ती कनकगिरिगुहागण्डशैलात्स्खलन्ती ।
क्षोणीपृष्ठे लुठन्ती दुरितचयचमूनिर्भरं भर्त्सयन्ती
पाथोधिं पूरयन्ती सुरनगरसरित् पावनी नः पुनातु ॥ २३ ॥

सस्नौ प्रयागे सह शिष्यसंघैः स्वयं कृतार्थो जनसंग्रहार्थी ।
अस्मारि माताऽपि च सा पुपोष दधार या दुःखमसोढ भूरि ॥ २४ ॥

अनुष्ठितिं द्रागवसाय्य वातैः कल्हारशीतैरुपसेव्यमानः ।
तीरे विशश्राम तमालशालिन्यत्रान्तरेऽश्रूयत लोकवार्ता ॥ २५ ॥

अथेन्द्रो नृपतिर्भूत्वा प्रजा धर्मेण पालयन् ।
सुधन्वनाम्ना प्रख्यातः सौराष्ट्रेष्वभवत्सुखीः ॥ २६ ॥

कृत्वा द्वारवतीं स्वस्य राजधानीं स भूपतिः ।
दिवं चकार पृथिवीं स्वपुरीममरावतीम् ॥ २७ ॥

स बाल्य एव जैनानां समयं समुपाश्रितः ।
निरादरोऽभूद्यज्ञेषु वेदेषु विबुधेषु च ॥ २८ ॥

सर्वज्ञोऽप्यसतां शास्त्रे कृत्रिमश्रद्धयाऽन्वितः ।
प्रतीक्षमाणः क्रौञ्चारिं मेलयामास सौगतान् ॥ २९ ॥

ततः स तारकारातिरजनिष्ट महीतले ।
भट्टपादाभिधा यस्य भूषा दिक्सुदृशामभूत् ॥ ३० ॥

स्फुटयन् वेदतात्पर्यमभाङ्जैमिनिसूत्रितम् ।
सहस्रांशुरिवानूरुव्यञ्जितं भासयन् जगत् ॥ ३१ ॥

राज्ञः सुधन्वनः प्राप नगरीं स जयन् दिशः ।
प्रत्युद्गम्य क्षितीन्द्रोऽपि विधिवत्तमपूजयत् ॥ ३२ ॥

सोऽभिनन्द्याशिषा भूपमासीनं काञ्चनासने ।
जगाद कोकिलव्याजाद् राजानं पण्डिताग्रणीः ॥ ३३ ॥

मलिनैश्चेन्न संगस्ते नीचैः काककुलैः पिक ।
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥ ३४ ॥

निर्ग्रन्थिनो निशम्यैनां वाचं तात्पर्यगर्भिताम् ।
नितरां चरणस्पृष्टा भुजङ्गा इव चुक्रुधुः ॥ ३५ ॥

छित्वा युक्तिकुठारेण जैनसिद्धान्तशाखिनम् ।
स तद्ग्रन्थेन्धनैर्श्चीर्णैः क्रोधज्वालामवर्धयत् ॥ ३६ ॥

उपन्यस्यत्सु साक्षेपं खण्डयत्सु परस्परम् ।
तेष्वदतिष्ठन्निर्घोषो भिन्दन्निव रसातलम् ॥ ३७ ॥

अधः पेतुर्बुधेन्द्रेण क्षताः पक्षेषु तत्क्षणम् ।
व्यूढकर्कशतर्केण तथागतधराधराः ॥ ३८ ॥

ततः प्रक्षीणदर्पेषु जैनेषु वसुधाधिपम् ।
बोधयन् बहुधा वेदवचांसि प्रशशंस सः ॥ ३९ ॥

बभाषेऽथ धराधीशो विद्यायत्तौ जयाजयौ ।
पृच्छामि भवतः किञ्चित् वक्तुं न प्रभवन्ति ये ॥ ४० ॥

यन्त्रोपलेषु सर्वांस्तान् घातयिष्याम्यसंशयम् ।
इति संश्रुत्य गोत्रेशो घटमाशीविषान्वितम् ॥ ४१ ॥

आनीयात्र किमस्तीति पप्रच्छ द्विजसौगतान् ।
वक्ष्यामहे वयं भूप श्वः प्रभातेऽस्य निर्णयम् ॥ ४२ ॥

इति प्रसाद्य राजानं जग्मुर्भूसुरसौगताः ।
पद्मानीव तपस्तेपुः कण्ठद्वयसपाथसि ॥ ४३ ॥

भास्करं प्रति भूदेवाः सोऽपि प्रादुरभूत्ततः ।
सन्दिश्य वचनीयांशमादित्येऽन्तर्हिते द्विजाः ॥ ४४ ॥

भट्टाचार्यं पुरस्कृत्य समाजग्मुर्नृपान्तिकम् ।
ज्ञात्वा गूढं प्रधानेभ्यः सौगताः कलशस्थितम् ॥ ४५ ॥

निर्ग्रन्थिनोऽपि संहृष्टाः सभां प्रापुर्महीपतेः ।
जैनास्तु ज्ञातवृत्तान्ता भुजङ्गोऽस्तीत्यवादिषुः ॥ ४६ ॥

भोगीशभोगशयनो भगवानिति भूसुराः ।
श्रुत्वा भूसुरवाक्यं तद्वदनं पृथिवीपतेः ॥ ४७ ॥

कासारशोषणम्लानसारसश्रियमाददे ।
अथ प्रोवाच दिव्या वाक् सम्राजमशरीरिणी ॥ ४८ ॥

नुदन्ती संशयं तस्य सर्वेषामपि शृण्वताम ।
सत्यमेव महाराज ब्राह्मणो यदभाषत ॥ ४९ ॥

मा कृथाः संशयं तत्र भव सत्यप्रतिश्रवः ।
श्रुत्वाऽशरीरिणीं वाणीं ददर्श वसुधाधिपः ॥ ५० ॥

मूर्तिं मधुरिपोः कुम्भे सुधामिव सुराधिपः ।
निरस्ताखिलसन्देहो विन्यस्तेतरदर्शनात् ॥ ५१ ॥

व्यधादाज्ञां ततो राजा वधाय श्रुतिविद्विषाम् ।
ततो भगवतस्तस्य विग्रहं परमाद्भुतम् ॥ ५२ ॥

त्रिलोकसुन्दराख्यं तं पुर्यां चक्रे प्रनिष्ठितम् ।
स्कन्दानुसारिणा राज्ञा जैना धर्मद्विषो हताः ॥ ५३ ॥

योगीन्द्रेणेव योगघ्नाः विघ्नास्तत्त्वावलम्बिना ।
हतेषु तेषु दुष्टेषु भूसुरः परितो बभौ ।
वर्णाश्रमसमाचारं स्थापयन्भुवि वैदिकम् ॥ ५४ ॥

कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु ।
निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः ॥ ५५ ॥

गिरेरवप्लुत्य गतिः सतां यः प्रामाण्यमाम्नायगिरामवादीत् ।
यस्य प्रसादात् त्रिदिवौकसोऽपि प्रपेदिरे प्राक्तनयज्ञभागान् ॥ ५६ ॥

सोऽयं गुरोरुन्मथनप्रसक्तं महत्तरं दोषमपाकरिष्णुः ।
अशेषवेदार्थविदास्तिकत्वात् तुषानलं प्राविशदेष धीरः ॥ ५७ ॥

श्रुत्वेति तां सत्वरमेव गच्छन् व्यलोकयत्त तुषराशिसंस्थम् ।
प्रभाकराद्यैः प्रथितभावैः उपस्थितं साश्रुमुखैर्विनेयैः ॥ ५८ ॥

धूमायमानेन तुषानलेन सन्दह्यमानेऽपि वपुष्यशेषे ।
सन्दृश्यमानेन मुखेन बाष्पपरीतपद्मश्रियमादधानम् ॥ ५९ ॥

दूरे विधूताघमपाङ्गभंग्या तं देशिकं दृष्टिपथावतीर्णम् ।
ददर्श भट्टो ज्वलदग्निकल्पो जुगोप यो वेदपथं जितारिः ॥ ६० ॥

अदृष्टपूर्वं श्रुतपूर्ववृत्तं दृष्ट्वाऽतिमोदं स जगाम भट्टः ।
अचीकरच्छिष्यगणैः सपर्यां उपाददे तामपि देशिकेन्द्रः ॥ ६१ ॥

उपात्तभिक्षः परितुष्टचित्तः प्रदर्शयामास स भाष्यमस्मै ।
सर्वो निबन्धो ह्यमलोऽपि लोके शिष्टेक्षितः सञ्चरणं प्रयाति ॥ ६२ ॥

भाष्यमालोक्य हृष्टात्मा भट्टाचार्यो यतीश्वरम् ।
निर्मत्सरो गुणग्राही निजगाद महामतिः ॥ ६३ ॥

दर्शनं दुर्लभं नृणां यतीश्वर भवादृशाम् ।
समासन्नशरीरान्ते समये तु विशेषतः ॥ ६४ ॥

पुण्यैः पुरातनैरेव दृष्टो हि भगवन्मया ।
नृणां संसृतिमोक्षाय त्वादृशैः संगतिर्भवेत् ॥ ६५ ॥

चिरं दिदृक्षुरेवास्मि भगवन्तं महायते ।
भगवानागतो दैवात्तन्मे दृष्टेर्महीयते ॥ ६६ ॥

अस्मिन्नष्टौ सहस्राणि वार्तिकानां यतीश्वर ।
विभान्ति प्रथमे भाष्ये तत्कृत्यै नालमस्म्यहम् ॥ ६७ ॥

नाहमद्य मुमूर्षुश्चेत्करिष्याम्यस्य वार्तिकम् ।
ईदृश्या मे मुमूर्षाया हेतुं शृणु यतीश्वर ॥ ६८ ॥

इतः पूर्वं प्रवृत्तास्ते जैना ब्राह्मणदूषकाः ।
महावीरमताक्रान्तो विरलो वैदिकोऽभवत् ॥ ६९ ॥

नास्तिक्यमीश्वरे वेदे धर्मे चासीन्नृणां तदा ।
महावीरं पुरस्कृत्य वर्धमानं स्वदेशिकम् ॥ ७० ॥

समाविश्य गृहे राज्ञां तान्वशीकृत्य सौगतान् ।
वेदोऽप्रमाणमित्यादिमिथ्यालापमचीकरन् ॥ ७१ ॥

ज्ञात्वाऽपि वैदिकं शास्त्रजालं सम्यग्गुरोर्मुखात् ।
निर्ग्रन्थिनो महातन्त्रान् महावीरमतानुगान् ॥ ७२ ॥

तान् जैनान्नाशकं जेतुं विवादे सर्वथैव हि ।
विजिगीषुरहं जैनान् उद्यतोऽभूवमादरात् ॥ ७३ ॥

तन्मतं न मया बुद्धं निषेध्यं वेददूषकम् ।
ततस्तेषां मतं बोद्धुं त एव शरणीकृताः ॥ ७४ ॥

शिष्यत्वेन न ते कश्चित्पर्यगृह्णन् महीसुरम् ।
तदब्राह्मणमात्मानं नाटयन् जैनवेषतः ॥ ७५ ॥

तन्मतस्थापनोद्युक्तं महावीराभिधं जिनम् ।
वर्धमानं गुरुं प्राप्य तदन्तेवासिभिः समम् ॥ ७६ ॥

पठन्ननुदिनं तत्र कतिचिद्वायनान्यहम् ।
तेषां सिद्धान्तमश्रौषं वेदमार्गमदूषयम् ॥ ७७ ॥

ईदृशी बुद्धिरुत्पन्ना निश्चिता यतिपुङ्गव ।
एकाक्षरोपदेष्टापि गुरुभूतो न संशयः ॥ ९७ ॥

उपदेष्टा तु शास्त्रस्य किं पुनः कथ्यते जिनः ।
अहं सर्वज्ञतोऽधीत्य शास्त्रं तस्य निरासकः ।
अभूवं यत्ततो दोषः प्रभूतो मयि विद्यते ॥ ९८ ॥

बाह्यं मतं निरसितुं सुगतादधीत्य बाल्यात्तमेव समघातयमार्य जित्वा ।
ईशं निरास्थमपि च स्वत एव वेदा मानं न तत्कृततयेति मताभिमानात् ॥ ९९ ॥

प्रायोऽधुना तदुभयप्रभवाघशान्त्यै प्राविक्षमार्य तुषपावकमात्तदीक्षः ।
भाग्यं न मे व्यजनि शाबरभाष्यवत्त्वद् भाष्येऽपि किञ्चन विलिख्य यशोऽधिगन्तुम्॥

इत्यूचिवांसमथ भट्टकुमारिलं तं ईषद्विकस्वरमुखाम्बुजमाह मौनी ।
हे भट्ट कर्मविमुखान् सुगतान्निहन्तुं जातं गुहं भुवि भवन्तमहं तु जाने ॥ १०१ ॥

संभावनाऽपि भवतो न हि पातकस्य सत्यं व्रतं चरसि सज्जनशिक्षणायं ।
उज्जीवयामि करकाम्बुकणोक्षणेन भाष्येऽपि मे कलय वार्तिकमङ्ग भव्यम् ॥१०२॥

प्रत्युत्तरं व्यधित भट्टगुरुर्मुनीन्द्रो मय्यल्पकेऽपि महिमोक्तिरियं तवार्हा ।
आजानतोऽत्र कुटिलेऽपि जने महान्तस्त्वारोपयन्ति हि गुणं धनुषीव शूराः ॥१०३॥

सञ्जीवनाय चिरकालमृतस्य च त्वं शक्तोऽसि शङ्कर दयोर्मिकटाक्षपातैः ।
आरब्धमेतदधुना व्रतमागमोक्तं मुञ्चन् सतां न भविताऽस्मि बुधाविनिन्द्यः ॥१०४॥

चार्वाकदर्शनवितानसरोपघातृशापेन संप्रति शतक्रतुदेशिकेन्द्रः ।
विद्योतते मगधसीमनि विश्वरूपनामा समस्तनयसागरपारदर्शी ॥ १०५ ॥

उम्बेक इत्यभिहितस्य हि तस्य लोके उवेति बान्धवजनैरभिधीयमाना ।
शप्ता सरोरुहभवेन सरस्वती सा जाता वधूरुभयभारतिकाभिधाना ॥ १०६ ॥

सर्वासु शास्त्रसरणीषु स विश्वरूपो मत्तोऽधिकः प्रियतमश्च ममाश्रवेषु ।
तत्प्रेयसीं शमधनेन्द्र विधाय साक्ष्ये वादे विजित्य विजित्य तमिमं वशगं विधेहि ॥

तेनैव तावकक्रुतिष्वपि वार्तिकानि कर्मन्दिवर्यतम कारय मा विलम्बः ।
त्वं विश्वनाथ इव मे समये समागाः तत्तारकं समुपदिश्य कृतार्थयेथाः ॥ १०८ ॥

इत्यूचिवांसमिममृद्धसुखप्रकाशं ब्रह्मोपदिश्य बहिरन्तरपास्तमोहम् ।
तन्वन्दयानिधिरसौ तरसाऽभ्रमार्गमार्गादवाप विषयान्मगधाभिधानान् ॥ १०९ ॥

अथ गिरमुपसंहृत्यादराद्भट्टपादः
शमधनपतिनाऽसौ बोधिताद्वैततत्त्वः ।
प्रशमितममतः संस्तत्प्रसादेन सद्यो
विदलदखिलबन्धो धाम सत्यं प्रपेदे ॥ ११० ॥

यदा प्रणम्योपशशाम शङ्करं स भट्टनामा मरणाय दीक्षितः ।
तत्पार्श्ववर्ती विदितार्थसंग्रहः स मण्डनाख्योऽभिजगाम शङ्करम् ॥१११॥

गुरुर्गरीयानपि वित्तहीनो विद्यासु वृद्धोऽपि गुरुप्रदिष्टः ।
अयं कुरूपी गुरुगेहवासी गुरुं विपत्तावपि नो जहाति ॥ ११२ ॥

गमित एष जनोऽद्य महात्मतो भगवतस्तव पादसरोरुहम् ।
कुरु दशं कृपयेति समीपगः श्रुतवचाः सहसा स ददौ करम् ॥११३॥

त्रिमुनिवारमसावपिबज्जलं रवमयं मुनिवक्त्रबिलोद्भवम् ।
इति मया पुर एव बहु श्रुतो नयनगोचरतामधुना गतः ॥ ११४ ॥

इति वचस्सुधयाप्यभिषिक्तवान् मुनिवरो गृहमेधिशिरोमणिम् ।
विदितवेद्यमनुद्धतभाषिणं मुनिजनैरभिवन्द्यपदाम्बुजः ॥ ११५ ॥

अथ गिरं गृहिराज उपाददे मम जनिस्सफला भवदीक्षणात् ।
न खलु लोचनमाश्रयते फलं घटपटादिभिरीक्षणमात्रतः ॥ ११६ ॥

भवादृशैः संगतिरेव नो गतिः गृहे स्थितानां सुतदारपोषिणाम् ।
क्रमेण मोक्तुं भवदीयसेवनामतो गृहीत्वार्हसि मामितोऽटितुम् ॥ ११७ ॥

एवं वादिनि मण्डने मृदुमनाः प्रोचे दयालिङ्गितः
श्रुत्या चोदितकर्म तच्च तनुयास्तेनान्तरं शुध्यति ।
शुद्धेऽन्तःकरणे परिस्फुरति तत् सौख्यात्मकं ब्रह्म ते
शुद्धे दर्पणमण्डले मुखमिव स्वात्मप्रभं सर्वगम् ॥ ११८ ॥

त्यक्त्वा मण्डन भेदगोचरधियं मिथ्याभिमानात्मिकां
अद्वैते भव निष्ठितो मम वचस्ते रोचते यद्यदः ।
तीर्त्वा संसृतिवारिधिं परपदे ज्ञानप्लवारोहणात्
पारे स्थास्यसि निर्वृतः सुखमये संसारवार्तोज्झिते ॥ ११९ ॥

एवमेनमनुनीय सत्पदैः ब्रह्मबोधनपरैर्गुरुवर्यः ।
मण्डनं निजपदे स्थिरभक्तिं संविधाय गमनाय मनोऽधात् ॥ १२० ॥

॥ इति श्रीशङ्करविजयमकरन्दसारे सप्तम आस्वादः समाप्तः ॥

## ॥ अष्टम आस्वादः ॥

### विश्वरूपजयः ।

पटुमण्डनमिश्रखण्डनार्थं प्रविशन् पद्मवनं नवं जयार्थी ।
तमधृष्यगिरं विधृष्य वादैर्यतिमाधात्स च पातु मां प्रमोदी ॥ १ ॥

निगमाध्ययने पूर्वं दुर्वासा धातुरन्तिके ।
स्वरेऽस्खलत्तदा वाणीं विहसन्तीं शशाप सः ॥ २ ॥

मानुषी त्वं भवेत्याशु शप्त्वा तस्यै मुनिर्ददौ ।
दर्शने शापमोक्षं च मर्त्यमूर्तेरुमापतेः ॥ ३ ॥

अथ सा भारती जज्ञे शोणातीरे द्विजन्मनः ।
तनया विष्णुमित्रस्य सर्वाङ्गमधुरा सती ॥ ४ ॥

सा वाणी बाल्यमायाता पितृभ्यां परिलालिता ।
क्रमेण ववृधे चान्द्री कलेव सितपक्षगा ॥ ५ ॥

विवाहोचितकाले तामुपयेमे यथाविधि ।
विश्वरूपो महाविप्रः सर्वज्ञां सर्ववित्तमः ॥ ६ ॥

जग्राह पाणिकमलं हिममित्रसूनुः
श्रीविष्णुमित्रदुहितुः करपल्लवेन ।
भेरीमृदङ्गपटहाध्ययनाब्जघोषैः
दिङ्मण्डले सुपरिमूर्च्छति दिव्यकाले ॥ ७ ॥

तया पत्न्या सहावात्सीत् सुचिरं भवने सुखम् ।
निरतो वैदिके मार्गे विश्वरूपो महाद्विजः ॥ ८ ॥

अथ प्रतस्थे भगवान्प्रयागात् तन्मण्डनं पण्डितमाशु जेतुम् ।
गच्छन् खसृत्या पुरमाललोके माहिष्मतीं मण्डनमण्डितां सः ॥ ९ ॥

पप्रच्छैकं द्विजं तत्र तद्गेहं गन्तुमुन्मनाः ।
क्व हि मण्डनमिश्रस्य वर्तते सद्म विस्तृतम् ॥ १० ॥

तमुवाच स विप्रोऽपि देशिकेन्द्रमनन्यधीः ।
विद्यालयमिति ख्यातं तालद्रुमसमुच्छ्रितम् ॥ ११ ॥

प्राकारतोरणाकीर्णं शिलास्तम्भशतावृतम् ।
तत्पुरः पाठशालाभिर्विशालाभिः समन्वितम् ॥ १२ ॥

वितर्दिकां विनिर्माय दशहस्तसमुन्नताम् ।
तत्राध्यस्य स्वयं शिष्यानध्यापयति नित्यशः ॥ १३ ॥

अगारोभयतो वीथ्यौ विनिर्मायातिशोभने ।
तद्द्वारेषु च सर्वत्र पाठयित्वा श्रुतीरपि ॥ १४ ॥

पञ्जरेष्वभितो बद्धाः प्रबुद्धा इव सर्वतः ।
शुकशारीमुखा यत्र तन्वते ननु वाङ्मुखम् ॥ १५ ॥

यद्वीथिकाद्वारनिबद्धकीरैरारादधिष्ठाय परस्परेण ।
विधीयते शास्त्रकथाप्रसंगो जानीहि तन्मण्डनपण्डितौकः ॥ १६ ॥

गायन्ति सामानि च यत्र शार्यः स्तुवन्ति कीरा यजुषा ऋचा च ।
परस्परं सुस्वरमादरेण जानीहि तन्मण्डनमिश्रधाम ॥ १७ ॥

स्वतः प्रमाणं परतः श्रुतिस्सा फलप्रदं कर्म फलप्रदोऽजः ।
जगद्ध्रुवं स्याज्जगदध्रुवं स्यात् कीरांगना यत्र गिरं गिरन्ति ॥ १८ ॥

द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ।
श्रुत्वा च तत्प्राप्य कवेः सकाशं ददर्श तं पद्मजसन्निकाशम् ॥ १९ ॥

स विश्वरूपः कृतवह्निकार्यः प्रतीक्षमाणोऽतिथिमातिथेयः ।
उदैक्षतैनं स्वशरीरभाभिः प्रकाशयन्तं विदिशो दिशश्च ॥ २० ॥

स भिक्षवेऽदृष्टचराय तस्मै सङ्कल्प्य भिक्षां पदयोरमुष्य ।
चिक्षेप पुष्पं चरणावनेजत् तत्पाथसाऽऽत्मानमसिश्चताद्धा ॥ २१ ॥

आतिथ्यमातनुत सर्वमथैष तस्मै भिक्षार्थमाश्रयत तं परिवेष्य भोज्यम् ।
हस्तेऽस्य नीरमदितोभयभारती सा नासौ पपौ न च मुमोच तथैव तस्थौ ॥

किं कारणं त्विति विशंकितविश्वरूपः पप्रच्छ तं यदि करोषि मयाथ वादम् ।
सम्यग्जयावधि तदैव समाददीय हस्ताम्भ इत्युदित आशु तदभ्युपागात् ॥

जैत्राश्रमाभ्युपगमे पणवन्धभाजौ साक्ष्ये विधाय वनितां च गिरोऽवतारम् ।
आरभ्य भुक्तिसमनन्तरकालमेव मीमांसयोरकुरुतां विबुधौ विवादम् ॥ २४ ॥

ब्रह्मैकं परमार्थसच्चिदमलं विश्वप्रपञ्चात्मना
शुक्ती रूप्यपरात्मनेव बहुलाज्ञानावृतं भासते ।
तज्ज्ञानान्निखिलप्रपञ्चविलयात् स्वात्मन्यवस्था परं
निर्वाणं जनिमुक्तमभ्युपगतं मानं श्रुतेर्मस्तकम् ॥ २५ ॥

बाढं जये यदि पराजयभागहं स्यां सन्न्यासमङ्ग परिहृत्य कषायचैलम् ।
शुक्लं वसीय वसनं द्वयभारतीयं वादे जयाजयफलप्रतिपादिकाऽस्तु ॥ २६ ॥

इत्थं प्रतिज्ञां कृतवत्युदारां श्रीशङ्करे भिक्षुवरे स्वकीयाम् ।
स विश्वरूपो गृहमेधिवर्यः चक्रे प्रतिज्ञां स्वमतप्रतिष्ठाम् ॥ २७ ॥

वेदान्ता न प्रमाणं चितिवपुषि पदे तत्र संगत्ययोगात्
पूर्वो भागः प्रमाणं पदचयगमिते कार्यवस्तुन्यशेषे ।
शब्दानां कार्यमात्रं प्रति समधिगता शक्तिरभ्युन्नतानां
कर्मभ्यो मुक्तिरिष्टा तदिह तनुभृतामाऽऽयुषः स्यात्समाप्तेः ॥ २८ ॥

वादे कृतेऽस्मिन्यदि मे जयान्यः त्वयोदितः स्याद्विपरीतभावः ।
येयं त्वयाऽभूद्वदिता प्रसाक्ष्ये जानाति चेत्सा भविता वधूर्मे ॥ २९ ॥

इत्थं प्रतिज्ञां सपणां विधाय वादं व्यधत्तां किल देशिकेन्द्रौ ।
कृत्वाऽथ वाणीमथ साक्षिभावे जयाजयप्राप्त्यभिधानदक्षाम् ॥ ३० ॥

एवं विजेतुमनसोरुपविष्टयोस्तां मालां गले व्यधित सोभयभारतीयम् ।
माला यदा मलिनभावमुपैति कण्ठे यस्यापि तस्य विजयेतरनिश्चयः स्यात् ॥

दिने दिने वासरमध्यमे सा ब्रूते पतिं भोजनकालमेव ।
समेत्य भिक्षुं समयं च भैक्ष्ये दिनान्यभूवन्निति पञ्चषाणि ॥ ३२ ॥

सस्मिताननपद्माभ्यां प्रगल्भाभ्यां प्रतिक्षणम् ।
ताभ्यामुत्तरमन्योन्यमश्रमेणैव खण्डितम् ॥ ३३ ॥

सस्वेदकम्पचिन्तारुट् तयोरेका न वागभूत् ।
न किञ्चित्कालहानिश्च दिनकृत्यकृतं विना ॥ ३४ ॥

अन्ते यतिक्षितिपतेरनुमोद्य युक्तिं मालां च मण्डनगले मलिनामवेक्ष्य ।
भिक्षार्थमुच्चलतमद्य युवामितीमावाचष्ट तं पुनरुवाच यतीन्द्रमम्बा ॥ ३५ ॥

ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ।
ब्रह्मणोऽधिपतिर्ब्रह्मन् भवान् साक्षात्सदाशिवः ॥ ३६ ॥

कोपातिरेकवशतः शपता पुरा मां शापावधिस्तव जयो विहितो विधात्रा ।
साऽहं यथागतमुपैमि द्विजप्रवीरेत्युक्त्वा तिरोधिमकृतोभयभारती सा ॥ ३७ ॥

तामामन्त्र्यान्तर्हितां योगशक्त्या पश्यन्देवीं भाष्यकर्ता बभाषे ।
जानामि त्वां देवि देवस्य धातुर्भार्यामिष्टामष्टमूर्तेः सगर्भ्याम् ॥ ३८ ॥

वाचामाद्यां देवतां विश्वगुप्त्यै चिन्मात्रामप्यात्तलक्ष्म्यादिरूपाम् ।
स्थानेषु त्वं स्मर्यमाणाऽऽविरास्स्व श्रेष्ठान् अर्थान् शारदाख्या दिशन्ती ॥ ३९ ॥

तथेति संश्रुत्य सरस्वती सा प्रायात्प्रियं धाम पितामहस्य ।
अदर्शनं तत्र समीक्ष्य सर्वे आकस्मिकं विस्मयमीयुरुच्चैः ॥ ४० ॥

स च यायजूकपरिषत्प्रमुखः प्रणिपत्य शङ्करमवोचदिदम् ।
विदितोऽस्ति संप्रति भवान् जगतः प्रकृतिर्निरस्तसमतातिशयः ॥ ४१ ॥

अहमाचरं बहु तपोऽसुकरं ननु पूर्वजन्मसु न चेदधुना ।
जगदीश्वरेण करुणानिधिना भवता कथा मम कथं घटते ॥ ४२ ॥

तदहं विसृज्य सुतदारगृहं द्रविणानि कर्म च गृहे विहितम् ।
शरणं वृणोमि भगवच्चरणावनुशाधि किङ्करममुं कृपया ॥ ४३ ॥

विश्वरूपं ततो नीत्वा भिक्षुतां देशिकोत्तमः ।
स्वमनोरथलाभेन सन्तुष्टः सुतरामभूत् ॥ ४४ ॥

आचार्यस्य प्रियकरः शिष्यः सन्न्यासनामतः ।
सुरेश्वर इति ख्यातो बभूव भुवनत्रये ॥ ४५ ॥

सन्न्यासमादौ विधिवत्प्रदाय पश्चादुपादिक्षदथात्मतत्त्वम् ।
आचार्यवर्यः श्रुतिमस्तकस्थं तदादिवाक्यं पुनरात्रभापे ॥ ४६ ॥

एवं पुराणगुरुणा परमार्थतत्त्वं शिष्टो गुरोश्चरणयोर्निपपात तस्य ।
धन्योऽस्म्यहं तव गुरो करुणाकटाक्षपातेन पातिततमा इति भाषमाणः ॥४७॥

इति श्रीशङ्करविजयमकरन्दसारे अष्टम आस्वादः समाप्तः ॥

## पद्मपादस्य बदरीनाथालयनिर्माणम् ।

प्रविशन्बदरीमवाप्य सद्यः परमाचार्यपदार्चनं क्रमाद्यः ।
धवलाचलमाप्य योऽप्यमाद्यच्छिवलावण्यमुदीक्ष्य तं प्रपद्ये ॥ ४८ ॥

बदर्यां पद्मपादोऽपि गुर्वाज्ञां शिरसा वहन् ।
मन्दिरं बदरीशस्य शीघ्रेण निरमापयत् ॥ ४९ ॥

ततः कदाचिन्नृपतेरगारं गतः स भिक्षां त्वरितं ययाचे ।
आलोचयज्ज्येष्ठवधूर्नृपस्य सासारिकावश्यककार्यधुर्या ॥ ५० ॥

अद्यालये कव्यमयं महात्मा स्नातुं गतो नेह नृपः स एनम् ।
वीक्ष्याह्वयेदित्यथ सा तटिन्यां स्नात्वा समेहीत्यवदद्यतीशम् ॥ ५१ ॥

विचार्य दूरां स नदीं क्षुधार्तो बहिः समेत्योन्नतगण्डशैले ।
दण्डेन घातद्वयमाततान धाराद्वयं निस्सृतमाशु तस्मात् ॥ ५२ ॥

स्नात्वाऽथ तत्राम्भसि योगिवर्यो भिक्षार्थमागत्य गृहे न्यषीदत् ।
आश्चर्यवित् कव्यकृतेन तेनाप्यन्नेन भिक्षामदित द्रुतं सा ॥ ५३ ॥

अत्रान्तरे सोऽपि गृहं समागात् निमन्त्रितैर्विप्रवरैः सहैव ।
अश्रावयत्तं च कनिष्ठभार्या द्वेषात्सपत्नीकृतकव्यनाशम् ॥ ५४ ॥

कोपेन खड्गं परिगृह्य राजा तां हन्तुकामः करमुद्दधार ।
स दर्शितश्रीनरसिंहरूपो हस्तं तदाऽस्तम्भयदस्य योगी ॥ ५५ ॥

तुष्टाव चैनं नृपतिस्तदा तत्तुष्ट्यै नृसिंहायतनं विभाव्य ।
स्वमन्दिरं चास्य समर्चनाय समर्पयामास समस्तराज्यम् ॥ ५६ ॥

## भैरवानुग्रहः नरसिंहप्रसादनं च ।

तदैव काशीनगरोषितः स श्रीशङ्कराचार्यमुनिर्विशेषात् ।
श्रीभैरवोपासकभैरवाख्यविप्रेण धूर्तेन चिरं न्यषेवि ॥ ५७ ॥

बलेः प्रदानादचिरात्प्रसीदेत् श्रीभैरवस्त्वेककपालमूर्ध्नः ।
इत्येवमालोच्य तमस्य मत्वा ग्रहीतुमेनं समवञ्चयत्सः ॥ ५८ ॥

शुश्रूषयैवातितरां प्रसन्नं कदाचिदेनं कठिनाशयः सः ।
दित्से बलिं देशिक भैरवाय भवच्छिरो मे वितरेत्यवोचत् ॥ ५९ ॥

उदारचेता अथ शङ्करार्यः आलोचयद् दिग्विजयं प्रपूर्णम् ।
परोपकाराय शरीरमेतत् प्रयात्विति द्रागुररीचकार ॥ ६० ॥

नीत्वा स तं निर्जन एव धूर्तो वने प्रशान्तं निजभैरवेशम् ।
समर्च्य खड्गं निशितं करेण धृत्वा शिरश्छेत्तुमनाः पुरोऽस्थात् ॥ ६१ ॥

नृसिंहदेवायतने तदैव ध्यायन्गुरुं चेतसि पद्मपादः ।
विज्ञाय योगात्तदिदं नृसिंहाविष्टो रुषाऽस्याशु समीपमाप ॥ ६२ ॥

तेनैव खड्गेन समं स विप्रं धृत्वा क्षणादस्य पुरो ननर्त ।
कोलाहलत्यक्तसमाधिरेषः स्तुत्या नृसिंहं व्यतनोत्प्रसन्नम् ॥ ६३ ॥

श्रीमदकलङ्कपरिपूर्णशशिकोटिश्रीधर मनोहरसटलकान्त ।
पालय कृपालय भवापदि निमग्नं मामसुरकाल नरसिंह नरसिंह ॥ ६४ ॥

स्तुत्या तुष्टादेष तुर्यावताराद् मोहाक्रान्तं मोचयन् साधकं तम् ।
सिद्धिश्चास्य श्रीमदार्योऽनुगृह्णन् दान्तैः कैश्चित्तत्र कालं व्यनैषीत् ॥६५॥

एवं विशिष्टनुतिभिर्नृहरौ प्रशान्ते स्वं भावमेत्य मुनिरेष बभूव शान्तः ।
स्वप्नानुभूतमिव शान्तमनारतमेनमात्मानमात्मगुरवे प्रणतं चकार॥ ६६ ॥

प्रह्लादवश्यो भगवान् कथं वा प्रसादितोऽयं नृहरिस्त्वयेति ।
सविस्मयैः स्निग्धजनैः स पृष्टः सनन्दनः सस्मितमित्यवादीत् ॥ ६७ ॥

पुरा किलाहोबिलभूधराग्रे पुण्यं समाश्रित्य किमप्यरण्यम् ।
भक्तैकवश्यं भगवन्तमेनं ध्यायन्ननेकान्दिवसाननैषम् ॥ ६८ ॥

किमर्थमेको गिरिगह्वरेऽस्मिन् वाचंयम त्वं वससीति शश्वत् ।
केनापि पृष्टोऽत्र किरातयूना प्रत्युत्तरं प्रागहमित्यवोचम् ॥ ६९ ॥

आकण्ठमत्यद्भूतमर्त्यमूर्तिः कण्ठीरवात्मा परतश्च कश्चित् ।
मृगो वनेऽस्मिन्मृगयो वसन् मे भवत्यहो नाक्षिपथे कदापि ॥ ७० ॥

इतीरयत्येव मयि क्षणेन वनेचरोऽयं प्रविशन्वनान्तम् ।
निबध्य गाढं नृहरिं लताभिः पुण्यैरगण्यैः पुरतो न्यधान्मे ॥ ७१ ॥

महर्षिभिस्त्वं मनसाऽप्यगम्यो वनेचरस्यास्य कथं वशेऽभूः ।
इत्यद्भुताविष्टहृदा मयाऽसौ विज्ञाप्यमानो विभुरित्यवादीत् ॥ ७२ ॥

एकाग्रचित्तेन यथाऽमुनाऽहं ध्यातस्तथा धातृमुखैर्न पूर्वैः ।
नोपालभेथास्त्वमितीरयन्मे कृत्वा प्रसादं कृतवांस्तिरोधिम् ॥ ७३ ॥

ततस्तयोरद्भुतवृत्तभाजोः स्तोत्रं वितेने सकलैश्च शिष्यैः ।
तैः साकमागाद्बदरीवनं स नारायणागारविलोकनाय ॥ ७४ ॥

सम्पूज्य नारायणमादरेण प्रेमोदयामोदितपद्मपादः ।
देवं त्विमं केरललोक एव सम्पूजयत्वित्यपि सोऽन्वजानात् ॥ ७५ ॥

ततो नृसिंहायतनं समेत्य संजातमाकर्ण्य समस्तवृत्तम् ।
माहात्म्यविद्भूकवरात्स भूपादन्वग्रहीद्भूरितरां सपर्याम् ॥ ७६ ॥

तुष्टस्तया देशिकसार्वभौमः श्रीचक्ररीत्या नगरं कृतेऽस्य ।
निर्माप्य च श्रीनगरं महात्मा पट्टाभिषेकं वितितान तस्य ॥ ७७ ॥

## श्रीगौडपादानुग्रहलाभः ।

स्वस्थः सोऽयं ब्रह्म सायं कदाचिद्ध्यायन् गङ्गापूरसंगार्द्रवातैः ।
आगच्छन्तं सैकते प्रत्यगच्छत् योगीशानं गौडपादाभिधानम् ॥ ७७ ॥

पाणौ फुल्लश्वेतपङ्केरुहश्रीमैत्रीपात्रीभूतभासा घटेन ।
आराद्राजत्कैरवानन्दसन्ध्यारागारक्ताम्भोदलीलां दधानम् ॥ ७९ ॥

पाणौ शोणाम्भोजबुद्ध्या समन्ताद्भ्राम्यद्भृङ्गीमण्डलीतुल्यकुल्याम् ।
अङ्गुल्यग्रासङ्गिरुद्राक्षमालामङ्गुष्ठाग्रेणासकृद्भ्रामयन्तम् ॥ ८० ॥

आर्यस्याथो गौडपादस्य पादावभ्यर्च्यासौ शङ्करः पङ्कजाभौ ।
भक्तिश्रद्धासम्भ्रमाक्रान्तचेताः प्रह्वस्तस्यावग्रतः प्राञ्जलिः सन् ॥ ८१ ॥

सिञ्चन्नेनं क्षीरवाराशिवीचीसाचिव्यायासन्नयत्नैः कटाक्षैः ।
दन्दज्योत्स्नादन्तुराश्चापि कुर्वन्नाशाः सूक्तिं सन्दधे गौडपादः ॥ ८२ ॥

कच्चित्सर्वां वेत्सि गोविन्दनाम्नो हृद्या विद्या संसृदुद्धारकृद्या ।
कच्चित्तत्वं तत्वमानन्दरूपं नित्यं सच्चिन्निर्मलं वेत्सि वेद्यम् ॥ ८३ ॥

भक्त्या युक्ताः स्वानुरक्ता विरक्ताः शान्ताः दान्ताः सन्ततं श्रद्दधानाः ।
कच्चित्तत्वज्ञानकामा विनीताः शुश्रूषन्ते शिष्यवर्या गुरुं त्वाम् ॥ ८४ ॥

कच्चिन्नित्याः शत्रवो निर्जितास्ते कच्चित्प्राप्ताः सद्गुणाः शान्तिपूर्वाः ।
कच्चिद्योगः साधितोऽष्टाङ्गयुक्तः कच्चिच्चित्तं साधु चित्तत्वगं ते ॥ ८५ ॥

इत्यद्वैताचार्यवर्येण तेन प्रेम्णा पृष्टः शङ्करः साधुशीलः ।
भक्त्युद्रेकाद्बाष्पपर्याकुलाक्षो बध्नन्मूर्धन्यञ्जलिं व्याजहार ॥ ८६ ॥

यद्यत्पृष्टं स्पष्टमाचार्यपादैः तत्तत्सर्वं भो भविष्यत्यवश्यम् ।
कारुण्याब्धीभूतयुष्मत्कटाक्षैः दृष्टस्याहुर्दुर्लभं किन्नु जन्तोः ॥ ८७ ॥

तत्तादृक्षज्ञानपाथोधियुष्मत्पादद्वन्द्वं पद्मसौहार्दहृद्यम् ।
दैवादेतद्दीनदृग्गोचरं चेद् भक्तस्यैतद्भागधेयं ह्यमेयम् ॥ ८८ ॥

इत्याकर्ण्याथाब्रवीद्गौडपादो वत्स श्रुत्वा वास्तवांस्त्वद्गुणौघान् ।
द्रष्टुं शान्तस्वान्तवन्तं मम त्वां गाढोत्कण्ठागर्भितं चित्तमासीत् ॥ ८९ ॥

दास्ये वरं ते विदुषां वराय प्रह्वानताङ्गाय वरं वृणीष्व ।
स प्राह पर्यायशुकर्षिमद्य भवन्तमद्राक्षमतुल्यभासम् ॥ ९० ॥

वरः परः कोऽस्ति तथापि चिन्ता चित्तत्वगा मेऽस्तु गुरो सदाऽपि ।
तथेति चोक्त्वा तमपास्तमोहो गतश्चिरञ्जीविमुनिस्तदानीम् ॥ ९१ ॥

स्वयमन्तर्हृदब्जे तं भास्वन्तं परमं गुरुम् ।
चिन्तयन्नेव गहनं वनं किञ्चित्प्रविष्टवान् ॥ ९२ ॥

## श्रीदक्षिणामूर्त्यनुग्रहलाभः ।

तस्य चिन्तयतश्चेतो लग्नमाद्ये गुरूत्तमे ।
वटद्रुमतलासीने तद्ध्याने निभृतं ह्यभूत् ॥ ९३ ॥

उपासकानां यदुपासनीयं उपात्तवासं वटशाखिमूले ।
तद्धाम दाक्षिण्यजुषा स्वमूर्त्या जागर्तु चित्ते मम बोधरूपम् ॥ ९४ ॥

एकेन मुद्रां परशुं करेण करेण चान्येन मृगं दधानः ।
स्वजानुविन्यस्तकरः पुरस्तादाचार्यचूडामणिराविरस्तु ॥ ९५ ॥

ध्यायतस्तस्य पुरतः प्रादुरास्तादिदेशिकः ।
प्राणोत्प्रास्तौच्च तं वाग्भिर्गद्गदाभिः परं शिवम् ॥ ९६ ॥

अद्राक्षमक्षीणदयानिधानमाचार्यमाद्यं वटमूलभागे ।
मौनेन मन्दस्मितभूषितेन महर्षिलोकस्य तमो नुदन्तम् ॥ ९७ ॥

कान्त्या निन्दितकुन्दकन्दलवपुर्न्यग्रोधमूले वसन्
कारुण्यामृतवारिभिर्मुनिजनं सम्भावयन् वीक्षितैः ।
मोहध्वान्तविभेदनं विरचयन्बोधेन तत्तादृशा
देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिना ॥ ९८ ॥

स्तुवतस्तदाऽऽस्त हृदयं गलिततमो मोदमतुलमनुभवतः ।
मौनव्याख्याप्रकटितपरात्मतत्त्वानुभूतिपरम् ॥ ९९ ॥

मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं
वर्षिष्ठान्तेवसदृषिगणैरावृतं ब्रह्मनिष्ठैः ।
आचार्येन्द्रं करकलितचिन्मुद्रमानन्दमूर्तिं
स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥ १०० ॥

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यस्साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १०१ ॥

स्तुवन्तं तं परेशानो दीक्षयामास भद्रया ।
मुद्रया गुरुदिष्टं तद्ब्रह्म तद्धृदि भासयन् ॥ १०२ ॥

वाचा वक्तुमशक्यमेव मनसा मन्तुं तथाऽऽस्वादितुं
स्वानन्दामृतपूरपूरितपरब्रह्माम्बुधेर्वैभवम् ।
अम्भोराशिविशीर्णवार्षिकशिलाभावं भजत्तन्मनः
यस्यांशांशलवे विलीनमधुनाऽऽनन्दात्मना निर्वृतम् ॥ १०३ ॥

कश्चित्कालं समाधाय परे ब्रह्मणि मानसम् ।
व्युत्थाय परमानन्दादिदं वचनमब्रवीत् ॥ १०४ ॥

धन्योऽहं कृतकृत्योऽहं विमुक्तोऽहं भवग्रहात् ।
नित्यानन्दस्वरूपोऽहं पूर्णोऽहं त्वदनुग्रहात् ॥ १०५ ॥

नमस्तस्मै सदेकस्मै नमश्चिन्महसे मुहुः ।
यदेतद्विश्वरूपेण राजते गुरुराज ते ॥ १०६ ॥

इति नतमवलोक्य शिष्यवर्यं समधिगतात्मसुखं प्रबुद्धतत्त्वम् ।
हितमिदमवबोधय प्रपन्नान् इति निगदन् स शिवस्तमन्वगृह्णात् ॥ १०७ ॥

॥ इति श्रीशङ्करविजयमकरन्दे अष्टम आस्वादः समाप्तः ॥

## ॥ नवम आस्वादः ॥

### कैलासे शम्भोः पञ्चलिङ्गप्राप्तिः ।

प्रतिपादितलिङ्गपञ्चकेऽमुं प्रणिवर्त्याशु तिरोहिते गिरीशे ।
विनिवृत्य स दिग्जयप्रवृत्तो विविधैः शिष्यवरैर्विभातु चित्ते ॥ १ ॥

अन्तर्हिते भगवति दक्षिणास्ये चिरं मुदा ।
तत्रैव वासमकरोत् स्वेच्छाचारी यतीश्वरः ॥ २ ॥

परितप्तपञ्चलोहस्रुतिपानेनातिविस्मितान् शिष्यान् ।
परिहृत्य परमयोगी परमैकान्तातिसुखमगादखिलम् ॥ ३ ॥

नेपालेश्वरमाकलय्य तदनु श्रीनीलकण्ठेश्वरं
हैमं शैलमपारपुण्यबदरीकेदारमारादगात् ।
श्रीशैलं कनकाचलं शुभमहाकैलासमासेदिवान्
लोकानुग्रहकाम्यया निरुपमः श्रीशङ्करार्यो गुरुः ॥ ४ ॥

नेपालेश्वरपञ्चवक्त्रकमलामोदातिभारोल्लसत्-
पञ्चद्वारशुभालये निवसतिं कृत्वाऽथ योगीश्वरः ।
वाञ्छासिद्धिमवाप्य विश्वजनकं श्रीनीलकण्ठेश्वरं
प्राप्य प्रौढतपश्चचार च ततः श्रीमेरुशैलं ययौ ॥ ५ ॥

तत्र स्वर्णशिलोच्चसानुशिखरप्रत्यन्तशैलान् गुहाः
वेदान्तागमसप्तकोटिसुमहामन्त्रान् महापापहान् ।
सम्भाव्यातितरां पुरश्चरणया लब्ध्वाष्टसिद्धीस्ततः
कृत्वा मेरुनुतिं महार्थजनिकां कैलासशैलं ययौ ॥ ६ ॥

गत्वा कैलासशैलं जगदखिलगुरुः शङ्कराचार्ययोगी
दृष्ट्वा साम्बं शिवं तं स्वयमिति सुचिरं चिन्तयन्नन्तरङ्गे ।
लब्ध्वा पञ्चात्मलिङ्गान्यमलतरशुभालिङ्गितान्यङ्गभाजां
भूत्यै सौन्दर्यसारं हिमगिरिदुहितुः प्रापयन् गामयासीत् ॥ ७ ॥

यातुं समादिश्य चतुर्दिशासु यतीश्वरोऽथानुसृतांश्च शिष्यान् ।
सिद्धेश्वरीं सिद्धनुतां दिदृक्षुः चचाल नेपालविशालदेशे ॥ ८ ॥

स्वाङ्के मुनिं साऽप्युपवेश्य वाक्यैः सुधोपमैः स्कन्दमिवाममर्श ।
सेर्ष्यं समालोक्य स सिद्धसङ्घः तयोरुपर्येव शिला ववर्ष ॥ ९ ॥

तां वृष्टिमस्तम्भयदस्य योगी प्रावारयत्ताश्च शिलाः परीताः ।
विभाति चाद्यापि तथैव चित्रं व्यर्थश्रमः सिद्धगणो बभूव ॥ १० ॥

सिद्धेश्वरीं चारु तदा ययाचे तक्रं पिपासुर्जननीमिवैषः ।
आस्फालितात्मोरुरजीजनत्सा तक्रापगां सा प्रथिताऽधुना सा ॥ ११ ॥

ततः पशुपतीशानं देवं श्रीकाष्ठमण्डले ।
पूजयामास विधिवद् द्राविडैः पूजकोत्तमैः ॥ १२ ॥

तत्समीपस्थितां शक्तिपीठगां गुह्यकेश्वरीम् ।
समयाचारविहितसपर्यां स्तुतवान्मुदा ॥ १३ ॥

चित्सरसीकलहंसी चलदवतंसीकृतव्याला ।
दशवदना जगदव्यादव्यापृतविग्रहा गुणयोः ॥ १४ ॥

त्वामेवैकां निगदति वेदः शिवेन साकं न हि ते भेदः ।
शिवशक्तिक्रमविद्याशिक्षा दातव्येति त्वयि मम भिक्षा ॥ १५ ॥

आदिवर्णजनुषोऽतितितिक्षोरवतस्तुर्याश्रममथ भिक्षोः ।
त्वत्पदयुगले मनोनिवासं भिक्षामर्पय जननि सहासम् ॥ १६ ॥

इत्थमाराधयन्पद्यैः देवीं गुह्येश्वरीं हृदि ।
तुष्टाशयस्ततोऽगच्छेद् महतां हि दिदृक्षया ॥ १७ ॥

मत्वा यतीन्द्रः कृतकृत्यभावं महत्समाभाषणमाप्तुकामः ।
स्वच्छन्दचारी मुनिराजदत्तात्रेयस्य स्याश्रममाजगाम ॥ १८ ॥

तत्रत्यान्यद्भुतान्येष पश्यन्नेव सुसंस्थितः ।
तस्मिन्नवसरे श्रीमान् दत्तात्रेयो महामुनिः ॥ १९ ॥

स्वच्छन्दचारी सर्वत्र स्वेच्छाकलितविग्रहः ।
मूर्तित्रयात्मको योगी दिग्वासा विजितेन्द्रियः ॥ २० ॥

शङ्कराचार्यवर्यं तमवलोकितुमागतः ।
श्रुत्वोदन्तं तदीयं स विस्मयाकलितान्तरः ॥ २१ ॥

आगतं तं निरीक्ष्यासौ प्रेमालिंगनपूर्वकम् ।
पप्रच्छ कुशलं तस्य सोऽप्यपृच्छद् गुरोः शुभम् ॥ २२ ॥

दत्तात्रेयं भुवनविनुतं वीक्ष्य नत्वा न्यगादीत्
　　वृत्तं स्वीयं सकलमपि तथा तान् विनीतांश्च शिष्यान् ।
सोऽपि श्रुत्वा मुनिपतिरदादाशिषो विश्वरूपा-
　　चार्यादिभ्यः सुखमवसतां तत्र तौ भाषमाणौ ॥ २३ ॥

स्वकृतान् दर्शयामास ग्रन्थान्भाष्यादिकानसौ ।
दृष्ट्वा तुष्टाव बहुधा सूत्रभाष्यमशेषतः ॥ २४ ॥

उवाच तं प्रसन्नात्मा बाष्पगद्गदया गिरा ।
कैलासे गिरिवर्ये तु दिव्यमूर्तिसमन्वितम् ॥ २५ ॥

पार्वतीस्कन्दनन्द्याद्यैः सेवितं परमेश्वरम् ।
द्रष्टुं वाञ्छामि योगीन्द्र कृपया तव सत्तम ॥ २६ ॥

कदा वा कैलासे कनकमणिसौधे सह गणैः
वसन् शम्भोरग्रे स्फुटघटितमूर्धाञ्जलिपुटः ।
विभो साम्ब स्वामिन् परमशिव पाहीति निगदन्
विधातॄणां कल्पान् क्षणमिव विनेष्यामि सुखतः ॥ २७ ॥

फलाद्वा पुण्यानां मयि करुणया वा त्वयि विभो
प्रसन्नेऽपि स्वामिन् भवदमलपादाब्जयुगलम् ।
कथं पश्येयं मां स्थगयति नमःसम्भ्रमजुषां
निलिम्पानां श्रेणिर्निजकनकमाणिक्यमुकुटैः ॥ २८ ॥

कदा वा त्वां दृष्ट्वा गिरिश तव भव्यांघ्रियुगलं
गृहीत्वा हस्ताभ्यां शिरसि नयने वक्षसि वहन् ।
समाश्लिष्याघ्राय स्फुटजलजगन्धान् परिमलान्
अलभ्यां ब्रह्माद्यैर्मुदमनुभविष्यामि हृदये ॥ २९ ॥

इत्यहं प्रत्यहं देवं प्रार्थये तद्दिदृक्षया ।
अद्यैवान्वग्रहीद्देवो भवतो दर्शनं यतः ॥ ३० ॥

शङ्करस्य वचः श्रुत्वा दत्तो हृष्टो बभूव ह ।
भवन्तं प्रापयिष्यामि महेशस्य तु सन्निधिम् ॥ ३१ ॥

दत्तस्य वचनं श्रुत्वा शङ्करो हृष्टमानसः ।
न्यदधात्तत्र दण्डादीन् कैलासगमनोत्सुकः ॥ ३२ ॥

दत्तो हस्तं समालम्ब्य शङ्करस्य हसन्प्रभुः ।
प्रविवेश गुहायां तु योगसिद्धिप्रभावतः ॥ ३३ ॥

तत्क्षणाच्छङ्करेणैव कैलासे पर्वतोत्तमे ।
भोगवत्यां महेशस्य सन्निधौ संस्थितोऽभवत् ॥ ३४ ॥

विस्मयाविष्टहृदयो ददर्श गिरिशं मुदा ।
आपादचूडमातृप्तेः अङ्गे चाङ्गे मनो दधत् ॥ ३५ ॥

भूम्ना यस्यास्तसीम्ना भुवनमनुसृतं यत्परं धाम धाम्नां
साम्नामाम्नायतत्त्वं यदपि च परमं यद्गुणातीतमाद्यम् ।
यच्चांहोहन्निरीहं गहनमिति मुहुः प्राहुरुच्चैर्महान्तो
माहेशं तन्महो मे महितमहरहर्मोहरोहं निहन्तु ॥ ३६ ॥

उमया दिव्यसुमङ्गलविग्रहयालिङ्गितवामाङ्ग विभो ।
साम्ब सदाशिव शम्भो शरणं मे तव चरणयुगम् ॥ ३७ ॥

यस्यासन् धरणीजलाग्निपवनव्योमार्कचन्द्रादयो
विख्यातास्तनवोऽष्टधा परिणता नान्यत्ततो वर्तते ।
ओंकारार्थविवेचनी श्रुतिरियं चाचष्ट तुर्यं शिवं
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ३८ ॥

नमः शिवाभ्यां नवयौवनाभ्यां परस्पराश्लिष्टवपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां नमो नमः शङ्करपार्वतीभ्याम् ॥ ३९ ॥

इत्थं स्तुवन्तं तं प्रेम्णा जगाद परमेश्वरः ।
मदंशतस्त्वं जातोऽसि भुवि चाद्वैतसिद्धये ॥ ४० ॥

एतत्प्रतिगृहाण त्वं पञ्चलिङ्गं सुपूजय ।
भस्मरुद्राक्षसम्पन्नः पञ्चाक्षरपरायणः ॥ ४१ ॥

शतरुद्रावर्तनैश्च तारेण भसितेन च ।
बिल्वपत्रैश्च कुसुमैः नैवेद्यैर्विविधैरपि ।
त्रिवारं सावधानेन गच्छ सर्वजयाय च ॥ ४२ ॥

त्वदर्थे कैलासाचलसुपालीगतमहा-
समुद्यचन्द्राभं स्फटिकधवलं लिङ्गकुलकम् ।
समानीतं सोमोद्यतविमलमौल्यर्चय परं
कलौ लिङ्गार्चायां भवति हि विमुक्तिः परतरा ॥ ४३ ॥

पुरा त्रेतायुगे सेन्द्रान्सिन्धुदैत्यविहिंसितान् ।
देवर्षीन्पातुकामोऽहं तेजोदेहसमन्वितः ॥ ४४ ॥

पार्वत्या नन्दिमुख्यैश्च त्रिसन्ध्यक्षेत्रगोऽभवम् ।
तदा मे त्र्यम्बकश्चेति नाम प्रोक्तं मुनीश्वरैः ॥ ४५ ॥

सुन्दरी चेति नामापि पार्वत्याः परिकीर्तितम् ।
शक्तिभक्तो ह्यग्रीवो देवीतत्त्वविशारदः ॥ ४६ ॥

देवीं द्रष्टुं समायातः सुन्दरीं मम वल्लभाम् ।
नत्वा तुष्टाव संहृष्टः सर्वशास्त्रानुसारतः ॥ ४७ ॥

सौन्दर्यलहरी चेति स्तोत्रं तद्विश्रुतं त्वभूत् ।
नन्दिकेशस्तु तत्स्तोत्रं विलिख्य ग्रन्थरूपतः ॥ ४८ ॥

गौतमादिमुनीन्द्रेभ्यो देवेभ्यश्च ह्युपादिशत् ।
इदानीं कालयोगेन सौन्दर्यलहरी क्षितौ ॥ ४९ ॥

नष्टा जाता च लोकेषु जनानां च हिताय हि ।
उपदिश्याः स्तोत्रमेतन्नन्दिना लिखितं वरम् ॥ ५० ॥

पुस्तकं त्वं गृहाणेति शङ्कराय ददौ शिवः ।
शङ्करो भृशसन्तुष्टः प्रणम्य परमेश्वरम् ॥ ५१ ॥

विज्ञाप्य परमेशानं दत्तेनापि समन्वितः ।
गन्तुकामश्च बदरीं जगृहे दत्तहस्तकम् ॥ ५२ ॥

सौन्दर्यलहरीस्तोत्रघटितं पुस्तकं वरम् ।
हस्ते धृत्वाऽतिहर्षेण बहिर्द्वारमुपागतम् ॥ ५३ ॥

दृष्ट्वा नन्दी कोपयुक्तो मया विलिखितं त्विदम् ।
कथं गृहीत्वा यासि त्वं भूलोकं यतिसत्तम ॥ ५४ ॥

इत्युक्त्वा तस्य हस्ताच्च जगृहे पुस्तकं हठात् ।
शिवदत्तं न दास्यामीत्येवं प्रोवाच शङ्करः ॥ ५५ ॥

नन्दिहस्तगतं त्वर्धं अर्धं वै शङ्करस्य च ।
तदर्धपुस्तकेनैव शङ्करः प्राप तं शिवम् ॥ ५६ ॥

अर्धं नन्दीश्वरोऽगृह्णात् मम हस्ताद्धठेन च ।
इत्युवाच, तदा शम्भुः वीक्ष्य प्राहाऽथ शङ्करम् ॥ ५७ ॥

मत्प्रसादात्त्वमेवार्धं कुरुष्व यतिसत्तम ।
हयग्रीवकृतं सर्वं समागच्छेत्तवाननात् ॥ ५८ ॥

एवं वरं तु सम्प्राप्य शम्भोः शङ्करदेशिकः ।
दत्तेन सह सम्प्राप क्षणात्तद्बदरीवनम् ।
दत्तेनानुगृहीतस्स प्रतस्थे दिग्जयेच्छया ॥ ५९ ॥

## भगवत्पादानां तीर्थक्षेत्रयात्रा ।

रौद्रे हिमालये पुण्ये क्षेत्रे केदारसंज्ञके ।
कृतस्थितिं पशुपतिं उपतस्थे स शङ्करः ॥ ६० ॥

हिमाद्रिपार्श्वेऽपि तटे रमन्तं सम्पूज्यमानं सततं मुनीन्द्रैः ।
सुरासुरैर्यक्षमहोरगाद्यैः केदारसंज्ञं शिवमीशमीडे ॥ ६१ ॥

केदारेशं स्तुवन्नित्थं गन्धमादनसंस्थितम् ।
दिव्यक्षेत्राटनपरः प्रपेदे दक्षिणां दिशम् ॥ ६२ ॥

नन्दयन् शास्त्रसंल्लापैः शिष्याननुचरान्बहून् ।
उज्जयिन्यभिधं क्षेत्रं क्रमेणाप स देशिकः ॥ ६३ ॥

चिच्छक्त्या भासते यत्र महाकालेश्वरः स्वयम् ।
निवासमकरोत्तत्र स्तुवन् देवमुमापतिम् ॥ ६४ ॥

अवन्तिकायां विहितावतारं मुक्तिप्रदानाय च सज्जनानाम् ।
अकालमृत्योः परिरक्षणार्थं वन्दे महाकालमहं सुरेशम् ॥ ६५ ॥

आनर्तेषु प्रभासाख्यं क्षेत्रमाप यतीश्वरः ।
यत्र सोमेश्वरो देवो यत्र प्राची सरस्वती ॥ ६६ ॥

देवं सोमेश्वरं तत्र सोमेनाराधितं पुरा ।
चिरमाराध्य तुष्टाव सरस्वत्यब्धिसङ्गमे ॥ ६७ ॥

सौराष्ट्रदेशे वसुधावकाशे ज्योतिर्मयं चन्द्रकलावतंसम् ।
भक्तिप्रदानाय कृतावतारं तं सोमनाथं शरणं प्रपद्ये ॥ ६८ ॥

ततो जगाम विन्ध्यस्य शिरो ह्यमरकण्टकम् ।
ऋक्षपादं च यच्छीर्षात् रेवानर्मदयोर्जनिः ॥ ६९ ॥

तयोश्च संगमस्थाने मान्धाताख्येऽतिपावने ।
कृतालयमथोंकारमीशमस्तौत्कृतार्हणः ॥ ७० ॥

कावेरिकानर्मदयोः पवित्रे समागमे सज्जनतारणाय ।
सदैव मान्धातृपुरे वसन्तमोङ्कारमीशं शिवमेकमीडे ॥ ७१ ॥

गोदावर्याः समुत्पत्तिस्थले सह्याद्रिपार्श्वगे ।
कृतालयं त्र्यंवकेशमाराध्यास्तौत्सुनिर्वृतः ॥ ७२ ॥

सिंह्य(सह्य)द्रिपार्श्वेऽपि तटे रमन्तं गोदावरीनीरपवित्रदेशे ।
यद्दर्शनात्पातकजातनाशः प्रजायते त्र्यम्बकमीशमीडे ॥ ७३ ॥

एलापुर्यां देवगिरौ घृषणेशं कृतालयम् ।
ववन्दे वरदं योगी स्तुवन् शिष्यैः परीवृतः ॥ ७४ ॥

एलापुरीरम्यशिवालयेऽस्मिन् समुल्लसन्तं त्रिजगद्वरेण्यम् ।
वन्दे महोदारतरस्वभावं सदाशिवं तं घृषणेश्वराख्यम् ॥ ७५ ॥

दारुकावनमासाद्य शङ्करो यतिपुङ्गवः ।
आमर्दनगराधीशमस्तौन्नागेशमादरात् ॥ ७६ ॥

आमर्दसंज्ञे नगरे च रम्ये विभूषिताङ्गं विविधैश्च भोगैः ।
सद्भुक्तिमुक्तिप्रदमीशमेकं श्रीनागनाथं शरणं प्रपद्ये ॥ ७७ ॥

ततो जगाम परलीं वैद्यनाथाभिधां पुरीम् ।
कृतालयं वैद्यनाथं तत्रास्तौन्निभृतान्तरः ॥ ७८ ॥

पूर्वोत्तरे पारलिकाभिधाने सदाशिवं तं गिरिजासमेतम् ।
सुरासुराराधितपादपद्मं श्रीवैद्यनाथं सततं नमामि ॥ ७९ ॥

ततो निर्गत्य पुण्यौघां नदीं भीमामवाप सः ।
तत्रालये कृतावासमस्तौच्चं भीमशङ्करम् ॥ ८० ॥

यो डाकिनीशाकिनिकासमाजे निषेव्यमाणः पिशिताशनैश्च ।
सदैव भीमादिपदप्रसिद्धं तं शङ्करं भक्तहितं नमामि ॥ ८१ ॥

श्रीशैले वासः ।

कुसुमितविविधपलाशभ्रमदलिकुलगीतमधुरनिस्वानम् ।
पश्यन्विपिनमयासीत् श्रीशैलं मल्लिकार्जुनावसथम् ॥ ८२ ॥

कलिकल्मषभङ्गायां सोऽद्रेराराचलत्तरङ्गायाम् ।
अधरीकृततुङ्गायां सस्नौ पातालगामिगाङ्गायाम् ॥ ८३ ॥

नमन्मोहभङ्गं नभोलेहिशृङ्गं त्रुटत्पापसङ्गं रटत्पक्षिभृङ्गम् ।
समाश्लिष्टगङ्गं प्रहृष्टान्तरङ्गं तमारुह्य शृङ्गं ददर्शेशलिङ्गम् ॥ ८४ ॥

प्रणमद्भवबीजभर्जनं प्रणिपत्यामृतसंपदार्जनम् ।
प्रमुमोद स मल्लिकार्जुनं भ्रमराम्बासचिवं नतः स्तुवन् ॥ ८५ ॥

श्रीशैलशृङ्गे विविधप्रसङ्गे शेषाद्रिशृङ्गेऽपि सदा वसन्तम् ।
तमर्जुनं मल्लिकपूर्वमेनं नमामि संसारसमुद्रसेतुम् ॥ ८६ ॥

कलाभ्यां चूडालङ्कृतशशिकलाभ्यां निजतपः-
फलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतु मे ।
शिवाभ्यामस्तोकत्रिभुवनशिवाभ्यां हृदि पुन-
र्भवाभ्यामानन्दस्फुरदनुभवाभ्यां नतिरियम् ॥ ८७ ॥

वचसा चरितं वदामि शम्भोरहमुद्योगविधासु तेऽप्रसक्तः ।
मनसा कृतिमीश्वरस्य सेवे शिरसा चैव सदाशिवं नमामि ॥ ८८ ॥

इदं ते युक्तं वा परमशिव कारुण्यजलधे
गतौ तिर्यग्रूपं तव पदशिरोदर्शनधिया ।

हरिब्रह्माणौ तौ दिवि भुवि चरन्तौ श्रमयुतौ
कथं शम्भो स्वामिन् कथय मम वेद्योऽसि पुरतः ॥ ८९ ॥

इत्थं स्तुवन्नमन्नीशं भक्तिवश्यं स भक्तितः ।
आनन्दलहरीमग्नो भ्रमराम्बामथानमत् ॥ ९० ॥

चाञ्चल्यारुणलोचनाञ्चितकृपां चन्द्रार्कचूडामणिं
चारुस्मेरमुखीं चराचरजगत्संरक्षिणीं तत्पदाम् ।
चञ्चच्चम्पकनासिकाग्रविलसन्मुक्तामणीरञ्जितां
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ९१ ॥

इत्थं तयोर्योगिवर्यः सपर्यां विदधत्सुधीः ।
कञ्चित्कालमुवासात्र सिद्धिक्षेत्रे तपश्चरन् ॥ ९२ ॥

अशेषदृश्योज्झितदृङ्मयानां अवस्थितानामिह राजयोगे ।
निष्ठास्वरूपं मुनिपुङ्गवानां स वर्णयामास निरीक्ष्य सम्यक् ॥ ९३ ॥

निश्वासलोपैर्निभृतैः शरीरैः नेत्राम्बुजैरर्धनिमीलितैश्च ।
आविर्भवन्तीममनस्कमुद्रां आलोकयामो मुनिपुङ्गवानाम् ॥ ९४ ॥

अमी यमीन्द्राः सहजामनस्कात् अहंममत्वे शिथिलायमाने ।
मनोऽतिगं मारुतवृत्तिशून्यं गच्छन्ति भावं गगनावशेषम् ॥ ९५ ॥

सिद्धिं तथाविधमनोविलयां समाधौ
श्रीशैलशृङ्गकुहरेषु कदोपलप्स्ये ।
गात्रं यदा मम लताः परिवेष्टयन्ति
कर्णे यदा विरचयन्ति खगाश्च नीडान् ॥ ९६ ॥

विचरन्तीं मतिं शुद्धां समाधौ निर्विकल्पके ।
विन्दन्मतिकृतैर्दोषैरलिप्तो व्यचरत्ततः ॥ ९७ ॥

## गोकर्णक्षेत्रयात्रा, मृतद्विजसुतोज्जीवनम् ।

अथैकदासौ यतिसार्वभौमः सर्वाणि तीर्थानि चरन् सतीर्थ्यैः ।
घोरात्कलेर्गोपितधर्ममारात् गोकर्णमभ्यर्णचलार्णवौघम् ॥ ९८ ॥

विरिञ्चांभोरुहनाभवन्द्यं प्रपञ्चनाट्याद्भुतसूत्रधारम् ।
तुष्टाव वामार्धवधूकं अस्तदुष्टावलेपं प्रणमन्नटेशम् ॥ ९९ ॥

चांपेयगौरार्धशरीरकायै कर्पूरगौरार्धशरीरकाय ।
धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय ॥ १०० ॥

गुणत्रयातीतविभावमित्थं गोकर्णनाथं वचसाऽर्चयित्वा ।
तिस्रस्स रात्रीस्त्रिजगत्पवित्रे क्षेत्रे मुदाऽत्र क्षिपति स्म कालम् ॥ १०१ ॥

वैकुण्ठकैलासविवर्तभूतं हरस्ततोऽग्रं हरिशङ्कराख्यम् ।
दिव्यस्थलं देशिकसार्वभौमः तीर्थप्रवासी नचिरादयासीत् ॥ १०२ ॥

भ्रमापनोदाय भिदावदानां अद्वैतमुद्रामिह दर्शयन्तौ ।
आराध्य देवौ हरिशङ्करौ द्वौ मूकांबिकायाः सदनं प्रतस्थे ॥ १०३ ॥

अंके निधाय व्यसुमात्मजातं मोहाकुलौ हन्त मुहुः प्ररुद्य ।
तदेकपुत्रौ द्विजदम्पती स दृष्ट्वा दयाधीनतया शुशोच ॥ १०४ ॥

अपारमञ्चत्यथ शोकमस्मिन् अभूयतोच्चैरशरीरवाचा ।
जायेत संरक्षितुमक्षमस्य जनस्य दुःखाय परं दयेति ॥ १०५ ॥

आकर्ण्य वाणीमशरीरिणीं तामसाविति व्याहरति स्म तज्ज्ञः ।
जगत्त्रयीरक्षणदक्षिणस्य सत्यं तवैकस्य तु शोभते सा ॥ १०६ ॥

इतीरयत्येव यतौ द्विजातेः सुतस्सुखं सुप्त इवोदतिष्ठत् ।
समीपगैः सर्वजनीनमस्य चरित्रमालेक्ष्य विसिस्मिये च ॥ १०७ ॥

## मूकाम्बिकाक्षेत्रवासः ।

रम्योपशल्यं कृतमालसालरसालहिन्तालतमालतालैः ।
सिद्धिस्थलीं साधकसंसदां तत् मूकांविकाधाम मुनिर्जगाहे ॥ १०८ ॥

उच्चावचानन्दजवाष्पमुच्चैरुद्दीर्णरोमाञ्चमुदारभक्तिः ।
अंबामिहापारकृपावलम्बां संभावयन्नस्तुत निस्तुलं सः ॥ १०९ ॥

मम न भजनशक्तिः पादयोस्ते न भक्तिः
न च विषयविरक्तिर्ध्यानयोगे न सक्तिः ।
इति मनसि सदाहं चिन्तयन्नाद्यशक्ते
रुचिरवचनपुष्पैरर्चनं सञ्चिनोमि ॥ ११० ॥

विज्ञप्तीरवधेहि मे सुमहता यत्नेन ते सन्निधिं
प्राप्तं मामिह कान्दिशीकमधुना मातर्न दूरीकुरु ।
चित्तं त्वत्पदभावने व्यभिचरद् दृग्वाक् च मे जातु चेत्
तत्सौम्ये स्वगुणैर्बधान न यथा भूयो विनिर्गच्छति ॥ १११ ॥

मूकाम्बामभिवाद्याथ शिष्यैः परिवृतोऽनघः ।
तं देशं तौलवं कृत्स्नं परिचक्राम शङ्करः ॥ ११२ ॥

## हस्तामलकस्य शिष्यतया स्वीकारः ।

स तौलवग्रामवरं प्रतीतं श्रीरौप्यपीठाख्यपुरं प्रपेदे ।
श्रीमाननन्तेश्वरमर्चयित्वा चन्द्रेश्वरं चारु मुनीन्द्र आर्चत् ॥ ११३ ॥

तत्र द्विजः कश्चन शास्त्रवेदी प्रभाकराख्यः प्रथितानुभावः ।
प्रवृत्तिशास्त्रैकरतः सुबुद्धिः आस्ते कृतर्न्मीलितकीर्तिवृन्दः ॥ ११४ ॥

गावो हिरण्यं धरणी समग्रा सद्बान्धवा ज्ञातिजनाश्च तस्य ।
सन्त्येव किं तैर्नहि तोष एभिः पुत्रो यदस्याजनि मुग्धचेष्टः ॥ ११५ ॥

न वक्ति किञ्चिन्न शृणोति किञ्चिद्ध्यायन्निवास्ते किल मन्दचेष्टः ।
रूपेषु मारो महसा महस्वान् मुखेन चन्द्रः क्षमया मही च ॥ ११६ ॥

ग्रहग्रहात्किं जडवद्विचेष्टते किं वा स्वभावादुत पूर्वकर्मणः ।
संचिन्तयंस्तिष्ठति तत्पिताऽनिशं समागतान्प्रष्टुमना बहुश्रुतान् ॥ ११७ ॥

शुश्राव तं ग्राममनिन्दितात्मा समागतं कञ्चन पूज्यपादम् ।
सोपायनः प्राप गुरुं व्यशिश्रणत् फलं ननामास्य च पादपङ्कजे ॥ ११८ ॥

अनीनमत्तं च तदीयपादयोः जडाकृतिं भस्मनिगूढवह्निवत् ।
स नोदतिष्ठत्पतितः पदांबुजे प्रायः स्वजाड्यं प्रकटं विधित्सति ॥ ११९ ॥

उपात्तहस्तः शनकैरवाङ्मुखं तं देशिकेन्द्रः कृपयोदतिष्ठिपत् ।
उत्थापिते स्वे तनये पिताऽब्रवीत् वद प्रभो जाड्यममुष्य किंकृतम् ॥ १२० ॥

वर्षाण्यतीयुर्भगवन्नमुष्य पञ्चाष्ट जातस्य विनाऽवबोधम् ।
नाध्यैष्ट वेदानलिखच्च नार्णानचीकरं चोपनयं कथञ्चित् ॥ १२१ ॥

क्रीडापरः क्रोशति बालवर्गः तथाऽपि न क्रीडितुमेष याति ।
बालाः शठा मुग्धमिमं निरीक्ष्य सन्ताडयन्तेऽपि न रोषमेति ॥ १२२ ॥

भुङ्क्ते कदाचिन्न च जातु भुङ्क्ते स्वेच्छाविहारी न करोति चोक्तम् ।
तथापि रुष्टेन न ताड्यतेऽयं स्वकर्मणा वर्धत एव नित्यम् ॥ १२३ ॥

इतीरयित्वोपेरते च विप्रे पप्रच्छ तं शङ्करदेशिकेन्द्रः ।
कस्त्वं किमेवं जडवत्प्रवृत्तः स चाब्रवीद्बालवपुर्महात्मा ॥ १२४ ॥

नाहं जडः किन्तु जडः प्रवर्तते मत्सन्निधानेन न सन्दिहे गुरो ।
षडूर्मिषड्भावविकारवर्जितं सुखैकतानं परमस्मि तत्पदम् ॥ १२५ ॥

ममेव भूयादनुभूतिरेषा मुमुक्षुवर्गस्य सदेति विद्वान् ।
पद्यैः परैर्द्वादशभिर्बभाषे चिदात्मतत्त्वं विधुतप्रपञ्चम् ॥ १२६ ॥

निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥१२७॥

यथा सूर्य एकोऽप्स्वनेकश्चलासु स्थिरास्वप्यनन्यद्विभाव्यस्वरूपः ।
चलासु प्रभिन्नासु धीष्वेवमेकः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२८॥

करस्थधात्रीफलवत् चित्स्वरूपं प्रकाशितम् ।
तत्पद्यैर्हि ततोऽस्याख्या हस्तामलक इत्यभूत् ॥ १२९ ॥

विनोपदेशं स्वत एव जातं परात्मबोधं द्विजवर्यसूनोः ।
व्यस्मेष्ट संप्रेक्ष्य स देशिकेन्द्रो न्यधात्स्वहस्तं कृपयोत्तमाङ्गे ॥ १३० ॥

पुराभवाभ्यासवशेन सर्वं स वेत्ति सम्यङ् न च वक्ति किञ्चित् ।
नो चेत्कथं स्वानुभवैकगर्भपद्यानि भाषेत निरक्षरास्यः ॥ १३१ ॥

द्विजपुत्रं निवृत्तं तं विज्ञाय यतिपुङ्गवः ।
ऊचे तत्पितरं नेह वस्तुं योग्यस्तवात्मजः ॥ १३२ ॥

देहगेहादिममता विद्यते नास्य भूसुर ।
बोधेनायं तमो हित्वा परमं धाम पश्यति ॥ १३३ ॥

इत्युक्त्वा विप्रतनयं गृहीत्वा प्रस्थितो गुरुः ।
किंचित्तमनुगम्याथ स्वगेहं प्राप्तवान् द्विजः ॥ १३४ ॥

विज्ञाप्य तस्मिन्निति निर्गतेऽसौ तदाप्रभृत्यत्र वसत्युदारः ।
आशैशवादात्मविलीनचेताः कथं प्रवर्तेत मृषाप्रपञ्चे ॥ १३५ ॥

निशाम्य पप्रच्छुरमुं विनेयाः स्वामिन्निनैव श्रवणाद्युपायान् ।
अलब्ध विज्ञानमयं कथं वा भवानिदं साधु विदांकरोतु ॥ १३६ ॥

तानब्रवीत्संयमिचक्रवर्ती कश्चित्पुरा यामुनतीरवर्ती ।
बभूव सिद्धः किल साधुवृत्तः सांसारिकेभ्यः सुतरां निवृत्तः ॥ १३७ ॥

तस्यान्तिके सा जननी किलास्य द्विहायनं जातु निवेश्य बालम् ।
क्षणं प्रतीक्षस्व शिशुं द्विजेति स्नातुं सखीभिः सह निर्जगाम ॥ १३८ ॥

अत्रान्तरे दैववशात्स बालः चंक्रम्यमाणो निपपात नद्याम् ।
मृतं तमादाय शिशुं तदीयाः चक्रन्दुरुच्चैः पुरतो महर्षेः ॥ १३९ ॥

आक्रोशमाकर्ण्य मुनिः स तेषां अत्यन्तखिन्नो निजयोगभूम्ना ।
प्राविक्षदङ्गं पृथुकस्य तस्य स एष हस्तामलकस्तपस्वी ॥ १४० ॥

तस्मादयं वेद विनोपदेशं श्रुतीरनन्ताः सकलाः स्मृतीश्च ।
सर्वाणि शास्त्राणि परं च तत्वं अज्ञातमेतेन न किञ्चिदस्ति ॥ १४१ ॥

स्वशिष्योदितपद्यानां गभीरार्थवतां गुरुः ।
विस्तृतं भाष्यमातेने विचित्रा महतां कृपा ॥ १४२ ॥

॥ इति श्रीशङ्करविजयमकरन्दसारे नवम आस्वादः समाप्तः ॥

## ॥ दशम आस्वादः ॥

### तोटकस्य शिष्यतया स्वीकारः ।

कलयन्निलयं च तुङ्गभद्रातटिनीरोधसि वेधसः स्त्रिया द्राक् ।
कतिचिच्छरदोऽत्यवाहयद्यो यतिराट् क्वापि मठे स मेऽस्तु सद्यः ॥ १ ॥

सञ्चारतः स्वैरमथाब्धितीरे भगन्दरस्तद्गुरुदेहमाप ।
कश्चिद्विनेयोऽस्य गुरोर्निपेवां विशेषतो भक्तिवशाच्चकार ॥ २ ॥

विनीतो मितसत्योक्तिः दयालुः सततं गुरोः ।
शुश्रूषातत्परः सोऽभूत् छायेवानुचरन् सदा ॥ ३ ॥

गुरौ तिष्ठति वै तिष्ठन् गच्छन् गच्छति सन्ततम् ।
स्वपन् स्वपति कुर्वाणः प्रबुद्धे तु प्रजागरम् ॥ ४ ॥

श्रीगुरोर्वस्त्रकौपीननिर्मलीकरणे रतः ।
दन्तकाष्ठप्रदाता च स्नानकाले यथोचितम् ॥ ५ ॥

अर्घ्यपाद्योपनेता च देवपूजारते गुरौ ।
ब्रुवाणे सति यत्किञ्चित् तच्छृण्वन्नधिकादरः ॥ ६ ॥

गुरोः श्रीमत्पदाम्भोजसंवाहनविचक्षणः ।
अनुक्तोऽपि हितं कुर्यात् अहितं न कदाचन ॥ ७ ॥

तच्छोणिताक्तवसनं प्रतिवस्त्रमेष कासारतीरगशिलातलपृष्ठभागे ।
नेनेक्ति भक्तिवशगो न जुगुप्सतेऽसौ यावन्मलं तदपगच्छति तावदद्धा ॥

किञ्चित्समाधाय पुरोक्तमंशुकं निर्णेक्तुकामः सरसीतटं प्रगे ।
प्रयाति संक्षाल्य विशुद्धबुद्धये जिघ्रत्यभीक्ष्णं पुनरेव धावति ॥ ९ ॥

एवं यतात्मा वसनं दिने दिने प्रक्षाल्य संवेष्ट्य ददाति भूयसे ।
शोकोऽपि किञ्चिन्मनसीति वर्तते नाशक्नुवं किञ्चिदपीह वेदितुम् ॥

तस्मिंस्तदा किल विनेयवरे स्वशाटीप्रक्षालनाय गतवत्यपवर्तनीं ताम् ।
व्याख्यानकर्मणि तदागममीक्षमाणो भक्तेषु वत्सलतया विललम्ब एषः ॥

शान्तिपाठमथ कर्तुमसंख्येयेषूद्यतेषु स विनेयवरेषु ।
स्थीयतां गिरिरपि क्षणमात्रादेष्यतीति समुदीरयति स्म ॥ १२ ॥

तां निशाम्य निगमान्तगुरूक्तिं मन्दधीरनधिकार्यपि शास्त्रे ।
किं प्रतीक्ष्यत इति स्म ह भित्तिः गर्वलेशसहितैः समदर्शि ॥ १३ ॥

गर्वदोषमपहर्तुमखर्वं स्वाश्रवेषु करुणातिशयाच्च ।
व्यादिदेश स चतुर्दश विद्याः सद्य एव मनसा गिरिनाम्ने ॥ १४ ॥

प्रक्षाल्यमानं वसनं यथाऽऽत्मनः शिरः समाहन्ति शिलाश्च कर्कशम् ।
भक्त्या परं क्षालयतो महात्मनः पद्यात्मना सा परिणाममेयुषी ॥ १५ ॥

श्रीमद्गुरोः पादसरोजमूलात् तदाश्रयात् तत्करुणावसेकात् ।
भक्तिर्लता तोटकवृत्तवृन्दहृद्यानि पद्यानि फलान्यवाप ॥ १६ ॥

कुतोऽप्यन्तर्विस्फुरन्त्या चिच्छक्त्या प्रेरितो बलात् ।
गायन्माद्यन्निवाधावत् गुरोश्चरणसन्निधिम् ॥ १७ ॥

" विदिताखिलशास्त्रसुधाजलधे महितोपनिषत्कथितार्थनिधे ।
हृदये कलये विमलं चरणं भव शङ्करदेशिक मे शरणम् ॥ १८ ॥

करुणावरुणालय पालय मां भवसागरदुःखविदूनहृदम् ।
रचयाखिलदर्शनतत्त्वविदं भव शङ्करदेशिक मे शरणम् ॥ १९ ॥

गायन्नित्थं मुक्तबन्धः कृत्तोन्मूलितवासनः ।
अभ्यधावत्स शान्तात्मा शरण्यमनघं गुरुम् ॥ २० ॥

श्रुत्वेदमपि ते शिष्या विस्मयाद्भित्तितां गताः ।
चिरादधिगतप्रज्ञास्तत्यजुर्दुष्टभावनाम् ॥ २१ ॥

प्रतिपित्सुरसावविनाशि पदं यतिधर्मरतो यतिमेव गुरुम् ।
विदितात्मसतत्वमुपेत्य कविं प्रणिपत्य निवेदितवान्स्वमतम् ॥ २२ ॥

भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम् ।
कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम् ॥ २३ ॥

विनिवर्त्य रतिं विषये विषमां परिमुच्य शरीरनिबद्धमतिम् ।
परमात्मपदे भव नित्यरतो जहि मोहमयं भ्रममात्ममतेः ॥ २४ ॥

विसृजान्नमयादिषु पञ्चसु तामहमस्मि ममेति मतिं सततम् ।
दृशिरूपमनन्तमृतं विगुणं हृदयस्थमवेहि सदाहमिति ॥ २५ ॥

बहुनाऽभिहितेन किमु क्रियते शृणु संग्रहमत्र वदामि ततः ।
त्वयि जागरितप्रभृति त्रितयं परिकल्पितमित्यसदेव सदा ॥ २६ ॥

परिकल्पितमित्यसदित्युदितं मन इत्यभिशब्दितमागमतः ।
उपपत्तिभिरेव च सिद्धमतो भवतोऽन्यदशेषमभूतमिति ॥ २७ ॥

यदबाह्यमनन्तरमेकरसं यदकार्यमकारणमद्वयकम् ।
यदशेषविशेषविहीनतरं दृशिरूपमनन्तमृतं तदसि ॥ २८ ॥

इयदेव मयोपनिषत्सु पदं परमं विदितं न ततोऽस्त्यधिकम् ।
इति पिप्पलभक्ष इवाभ्यवदत् ह्यवशिष्टमतिं विनिवारयितुम् ॥ २९ ॥

इतरोऽपि गुरुं प्रणिपत्य जगौ भगवन्निति तारितवानसि माम् ।
अवबोधतरेण समुद्रमिमं मृतिजन्मजलं सुखदुःखझषम् ॥ ३० ॥

अधुनाऽस्मि सुनिर्वृत आत्मरतिः कृतकृत्य उपेक्षक एकमनाः ।
प्रहसन्विषयान्मृगतोयसमान् विचरामि महीं भवता सहितः ॥ ३१ ॥

तव दास्यमहं भृशमामरणात्प्रतिपद्य शरीरधृतिं भगवन् ।
करवाणि मया शकनीयमिदं तव कर्तुमतोऽन्यदशक्यमिति ॥ ३२ ॥

येषां धीसूर्यदीप्त्या प्रतिहतिमगमन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतुर्जननमरणसन्तानदोलाधिरूढेः ।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैर्भूषिताः शिष्यसंघाः
सद्यो मुक्ताः स्थितास्तान्यतिवरमहितान्यावदायुर्नमामि ॥ ३३ ॥

पद्यजातमुदारार्थमद्वैतप्रतिपादकम् ।
तोटकाख्यमभूत्तस्मात् तोटकाख्यो बभूव सः ॥ ३४ ॥

अद्यापि तत्प्रकरणं प्रथितं पृथिव्यां तत्संज्ञया लघु महार्थमनल्पनीति ।
शिष्टैर्गृहीतमतिशिष्टपदानुविद्धं वेदान्तवेद्यपरतत्त्वनिवेदनं तत् ॥ ३५ ॥

### भगन्दरव्याधिप्रतीकारः ।

भगन्दरव्याधिनिपीडितं गुरुं निरीक्ष्य शिष्याः समबोधयन् शनैः ।
नोपेक्षणीयो भगवन्महामयः संपीडयन् शत्रुरिवर्द्धिमाप्नुयात् ॥ ३६ ॥

चिकित्सका व्याधिनिदानकोविदाः संपृच्छनीया भगवन्नितस्ततः ।
स्वस्थे भवत्पादसरोरुहद्वये स्वस्था वयं ते मधुपायिवृत्तयः ॥ ३७ ॥

निर्बन्धतो गुरुवरः प्रददावनुज्ञां
दिग्भ्यो भिषग्वरसमानयनाय तेभ्यः ।

नत्वा गुरुं प्रतिदिशं प्रययुः प्रहृष्टाः
शिष्याः प्रवासकुशला गुरुभक्तिभाजः ॥ ३८ ॥

बहुदिनैर्बहुदेशसमागतान् सबहुमानमिदं मुनिरब्रवीत् ।
कुशलता भवतामपि वर्तते गृहकलत्रसुतादिषु संप्रति ॥ ३९ ॥

उपगुदं भिषजः परिबाधते गद उदेत्य तनुं तनुमध्यगः ।
यदिदमस्य विधेयमिदं ध्रुवं गदत रोगतमस्तिमिरारयः ॥ ४० ॥

चिरमुपेक्षितवानहमेतकं दुरितजोऽयमिति प्रतिभाति मे ।
निगदिते मुनिनेति भिषग्वराः विदधिरे बहुधा गदसत्क्रियाः ॥ ४१ ॥

न च शशाम गदो बहुतापदो विमनसः पटवो भिषजोऽभवन् ।
न दहनं विरहय्य मुनेर्गदं शमयितुं प्रभवन्ति भिषग्जनाः ॥ ४२ ॥

अनुचितं यमिनां दहनक्रियेत्यपथभीति मनो भिषजामभूत् ।
अथ निवेद्य गते भिषजां गणे हृदयगौ विदधे मुनिरश्विनौ ॥ ४३ ॥

द्विजतनुं प्रविधाय भिषग्वरौ मनुजलोकमुपेयतुरश्विनौ ।
मुनिवरोऽप्यवलोक्य तुतोष तौ नयनमानसहारिवपुर्धरौ ॥ ४४ ॥

दृढसुधामयदोर्युगलेन तौ गदमुदीक्ष्य समस्पृशतां शनैः ।
समभवन्मुनिरेष निरामयः स्वभवनं ययतुः सुखमश्विनौ ॥ ४५ ॥

## सुरेश्वरेण वार्तिकप्रणयनम्, पद्मपादेन पञ्चपादिकाप्रणयनं च ।

ततः कदाचित्प्रणिपत्य भक्त्या सुरेश्वरो देशिकमात्मनिष्ठम् ।
शारीरकेऽत्यन्तगभीरभावे दत्तोपदेशं प्रणमन् जगाद ॥ ४६ ॥

मम यत्करणीयमस्ति ते त्वमिमं मामनुशाध्यसंशयम् ।
तदिदं पुरुषस्य जीवितं यदयं जीवति भक्तिमान्गुरौ ॥ ४७ ॥

इतीरिते शिष्यवरेण शिष्यं प्रोचे गरीयानतिहृष्टचेताः ।
मत्कस्य भाष्यस्य विधेयमिष्टं निबन्धनं वार्तिकनामधेयम् ॥ ४८ ॥

दृष्टं सतर्कं भवदीयभाष्यं गभीरवाक्यं न ममास्ति शक्तिः ।
तथाऽपि भावत्ककटाक्षपातैर्यते यथाशक्ति निबन्धनाय ॥ ४९ ॥

अस्त्वेवमित्यार्यपदाभ्यनुज्ञां आदाय मूर्ध्ना स विनिर्जगाम ।
अथागमन् शिष्यगणास्तदीया दृष्ट्वागुरुं ते क्रमशः प्रणेमुः ॥ ५० ॥

कर्मैकतानमतिरेष कथं गुरो ते विश्वासपात्रमगमत्स सुरेश्वरोऽद्य ।
भाष्यस्य पद्मपद एव करोतु टीकामित्यूचिरे रहसि योगिवरं विधेयाः ॥५१॥

आसादितोऽयं महतः प्रयत्नात् स चेन्न रोचेत न वीक्ष्यतेऽन्यः ।
अहं बहूनामनभीष्टकार्यं न कारयिष्ये हि महानिबन्धम् ॥ ५२ ॥

सनन्दनो नन्दयिता जनानां निबन्धमेकं विदधातु भाष्ये ।
न वार्तिकं तत्तु परप्रतिज्ञं व्यधात्प्रतिज्ञां स हि नूत्नदीक्षः ॥ ५३ ॥

आदिश्येत्थं शिष्यसंघं यतीन्द्रः प्रोवाचेत्थंनूत्नभिक्षुं रहस्तम् ।
भाष्ये भिक्षो मा कृथा वार्तिकं त्वं नेमे शिष्याः सेहिरे दुर्विदग्धाः ॥५४॥

स्वातन्त्र्यात्त्वं ग्रन्थमेकं महात्मन् कृत्वा मह्यं दर्शयाध्यात्मनिष्ठम् ।
विद्वन्यद्वत्प्रत्ययः स्यादमीषां शिष्याणां नो ग्रन्थसन्दर्शनेन ॥ ५५ ॥

इत्थं प्रोक्तः सोऽल्पकालेन भिक्षुः ग्रन्थं कृत्वा दर्शयामास तस्मै ।
ग्रन्थं दृष्ट्वा मोदमानो यतीन्द्रः तं चान्येभ्यो दर्शयामास हृद्यम् ॥ ५६ ॥

यत्राद्यापि श्रूयते मस्करीन्द्रैः निष्कामात्मा यत्र नैष्कर्म्यसिद्धिः ।
तन्नाम्नाऽयं पप्रथे ग्रन्थवर्यः तन्माहात्म्यात्सर्वलोकादृतोऽभूत् ॥ ५७ ॥

भूयो गुरुस्तमवदन्मम याजुषीया शाखा तदन्तगतभाष्यनिबन्ध इष्टः ।
तद्वार्तिकं मम कृते भवता प्रणेयं सच्चेष्टितं परहितैकफलं प्रसिद्धम् ॥ ५८ ॥

तद्वत् त्वदीया किल काण्वशाखा ममापि तत्रास्ति तदन्तभाष्यम् ।
तद्वार्तिकं चापि विधेयमिष्टं परोपकाराय सतां प्रवृत्तिः ॥ ५९ ॥

इत्थं स उक्तो भगवत्पदेन सुरेश्वरोऽसौ विदुषां वरिष्ठः ।
चकार भाष्यद्वयवार्तिके द्वे ह्याज्ञा गुरूणामविचारणीया ॥ ६० ॥

सनन्दनश्चाथ गुरोरनुज्ञया भाष्यस्य टीकां व्यधितेरितः पराम् ।
यत्पूर्वभागः किल पञ्चपादिका तच्छेषगा वृत्तिरिति प्रथीयसी ॥ ६१ ॥

अथाब्जपात्कर्तुमनाः स तीर्थयात्रामयाचिष्ट गुरोरनुज्ञाम् ।
स तीर्थसेवां मनसः प्रसादिनीं मत्वा गुरुश्चाप्यददादनुज्ञाम् ॥ ६२ ॥

आट क्षितिं बहुविधां प्रयतान्तरात्मा तीर्थेषु तीर्थकवरो व्रजितो न्यमांक्षीत् ।
श्रीकालहस्तिपपदं पुनराव्रजत्स काञ्चीपुरं पुरवरं त्वथ पुण्डरीकम् ॥ ६३ ॥

रामसेतुगमनाय सन्दधे मानसं मुनिरनुत्तमः पुनः ।
वर्त्मनि प्रयतमानसो व्रजन् सन्ददर्श सरितं कवेरजाम् ॥ ६४ ॥

कवेरकन्यासलिलाभिषिक्तः श्रीरङ्गनाथस्य पदारविन्दे ।
आनर्च नम्रो विनयी ततोऽगात् श्रीजम्बुकेशं जगदेकनाथम् ॥ ६५ ॥

देवीं दृष्ट्वा मार्गमध्याभियातं गेहं भिक्षुर्मातुलस्याजगाम ।
मोदं प्रापन्मातुलः शास्त्रवेदी भिक्षां चक्रे मातुलस्यैव गेहे ॥ ६६ ॥

पप्रच्छैनं मातुलो भुक्तवन्तं किंस्विच्छन्नं पुस्तकं साधु हस्ते ।
टीका विद्वन्भाष्यगेति ब्रुवाणस्तं देहीति प्रोचुषेऽदत्त तां च ॥ ६७ ॥

प्रबन्धनिर्माणविचित्रनैपुणीं दृष्ट्वा प्रमोदं स विवेद किञ्चित् ।
मतान्तराणां किल युक्तिजालैः निरुत्तरं बन्धनमाल्लुलोके ॥ ६८ ॥

गुरोर्मतं स्वाभिमतं विशेषात् निराकृतं तत्र समत्सरोऽभूत् ।
साधुर्निबन्धोऽयमिति ब्रुवाणः तं साम्यसूयं स कृताभिनन्दनः ॥ ६९ ॥

गच्छामि सेतुं त्वयि पुस्तभारं निक्षिप्य जीवो मम वर्ततेऽत्र ।
यथेतरेषां पशुगोहिरण्ये प्रीतिस्तथा नः खलु पुस्तकेषु ॥ ७० ॥

स पद्मपादीं च गृहे प्रयास्यन् शिष्यं विचिक्षेप तमेवमुक्त्वा ।
प्रतिष्ठमानस्य बभूव कष्टं निमित्तमेष्यत्फलसूचनाय ॥ ७१ ॥

अस्पन्दतास्य नयनं किल वाममीषत्
पुस्फोर बाहुरपि वामगतस्तथोरुः ।
चुक्षाव नाऽस्य पुरतः क्वचिदस्खलीच्च
सर्वं ययौ न गणयन्गुरुरस्मदीयः ॥ ७२ ॥

गतेऽत्र मेने किल मातुलोऽस्य ग्रन्थे स्थितेऽस्मिन् गुरुपक्षहानिः ।
दग्धेऽत्र जायेत महापवादो नोक्त्या निराकर्तुमपि प्रभुत्वम् ॥ ७३ ॥

पक्षस्य नाशाद् गृहनाश एव नो वरं गृहेणैव दहामि पुस्तकान् ।
एवं निरूप्य न्यदधाद्धुताशन चुक्रोश चाग्निर्दहतीति मे गृहान् ॥ ७४ ॥

सेतुं दृष्ट्वा पुण्यत्तीर्थं स योगी पश्यन्देशान् मातुलीयं जगाम ।
गेहं दग्धं तस्य पुस्तेन सार्धं श्रुत्वाऽनल्पं खेदमापेदिवान् सः ॥ ७५ ॥

विश्वस्य मां निहितवानसि पुस्तभारं
तच्चादहद् हुतवहः परितः प्रमादात् ।

तावान्न मे सदनदाहकृतोऽनुतापो
यावांस्तु पुस्तकविनाशकृतो मम स्यात् ॥ ७६ ॥

इत्थं ब्रुवन्तं तमथाभ्यभाणीत् पुस्तं गतं बुद्धिरवस्थिता मे ।
उक्त्वा समारब्ध पुनश्च टीकां कर्तुं स धीरो यतिवृन्दवन्द्यः ॥ ७७ ॥

दृष्ट्वा बुद्धिं मातुलस्तस्य भूयो भीतः प्रास्यद्भोजने तन्मतिघ्नम् ।
किञ्चिद्द्रव्यं यद्वशान्नोऽक्षमिष्ट टीकां कर्तुं पूर्ववत्पद्मपादः ॥ ७८ ॥

इत्थं स तीर्थनिकरं परिषेव्य दीनो द्रष्टुं ययौ स्वगुरुमेव पुनस्स तस्मै ।
देशाय यत्र वसति स्म स देशिकेन्द्रः तस्मै नमो व्यधित वृत्तमथोऽभ्यधत्त ॥

अतिदीनमनाः शनैरवादीत् करुणं गद्गदवाक् स पद्मपादः ।
अधुना धिषणा यथापुरं नो विधुनाना विशयं प्रसादमेति ॥ ८० ॥

प्रयतेऽहं पुनरेव यदा तां प्रविधातुं बहुधा कृतयत्नः ।
न यथापूर्वमुपक्रमते ताः पटुयुक्तीः भगवन्मम बुद्धिः ॥ ८१ ॥

इति वादिनमेनमार्यपादो वचनैः सान्त्वयति स्म वल्गुबन्धैः ।
विषमो बत कर्मणां विपाको विषमोहोपमदुर्निवार एषः ॥ ८२ ॥

पूर्वं भक्त्या यत्त्वया मत्समीपे प्रेम्णा याऽसौ वाचिता मञ्चपादी ।
सा मे चित्तान्नापयात्यद्य शोको याताच्छीघ्रं तां लिखेत्याख्यदार्यः ॥८३॥

प्रसभं स विलिख्य पञ्चपादीं परमानन्दभरेण पद्मपादः ।
उदतिष्ठदतिष्ठदभ्यरोदीत् पुनरुद्गायति तु स्म नृत्यति स्म ॥ ८४ ॥

ततः सुब्रह्मण्याद्यमरनिलयेषु प्रविचरन्
ततः स्वैरं हर्षादपि जनपदान् तौलवमुखान् ।

पवित्रीकुर्वाणः परशिव इवाशेषविनुतो
मतिश्रीसाम्राज्ये व्यजयत महान् शङ्करगुरुः ॥ ८५ ॥

श्रृङ्गगिरौ वासः शारदाप्रतिष्ठा शिष्याध्यापनं च ।

गोकर्णयात्रां स विधाय योगी सह्याद्रिमासाद्य सवेदपादम् ।
वराहदंष्ट्रोद्भवतुङ्गभद्रामूले व्यधादाह्निकमादरेण ॥ ८६ ॥

विभण्डकस्याश्रममाप्य तुङ्गभद्रातटेऽपश्यदयं विचित्रम् ।
प्रसार्य भोगं भुवि रक्ष्यमाणं तच्छायया भोगिवरेण भेकम् ॥ ८७ ॥

निर्वैरसत्वं कलयन्स्थलं तत् चित्ते चकारात्मनिवासयोग्यम् ।
श्रीतुङ्गभद्रातटरम्यभागे वाण्यालयारम्भकृतोद्यमोऽभूत् ॥ ८८ ॥

श्रीमच्छङ्करदेशिको मुनिवरः श्रीब्रह्मविद्यात्मिकां
श्रीचक्रोपरि भावयन् भगवतीं श्रीशारदामम्बिकाम् ।
तां संस्थाप्य च मन्दिरेऽतिमहिते श्रृङ्गाचलस्थेऽर्चयन्
स्वान्तेवासिवरं सुरेशमपि तत्पूजार्थमाजिज्ञपत् ॥ ८९ ॥

सविधे निवसन्नेव शरदः सोत्यवीवहत् ।
शारदाराधनानन्ददुन्दिलोऽस्तौत्स मातरम् ॥ ९० ॥

सुवक्षोजकुम्भां सुधापूर्णकुम्भां प्रसादावलम्बां प्रपुण्यावलम्बाम् ।
सदास्येन्दुबिम्बां सदानोष्ठबिम्बां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ९१ ॥

कटाक्षे दयार्द्रां करेज्ञानमुद्रां कलाभिर्विनिद्रां कलापैः सुभद्राम् ।
पुरस्त्रीं विनिद्रां पुरस्तुङ्गभद्रां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ९२ ॥

वाग्देव्याः सविधे श्रीमद्गोपुराट्टालशोभितम् ।
श्रीमठं तत्र निर्माय विद्यापीठमचीक्लृपत् ॥ ९३ ॥

अध्यापयामास स भाष्यमुख्यानाकर्णनप्राप्यमहापुमर्थान् ।
ग्रन्थान्निजांस्तत्र मनीषिमुख्यान् आदिष्टविद्याग्रहणे समर्थान् ॥ ९४ ॥

शिष्यैश्चतुर्भिः सह तत्र विद्याव्यासङ्गशीलः स चिरं न्यवात्सीत् ।
विलोक्य यस्यास्य सभां जनौघो जगाद पञ्चास्यसभां भुवीति ॥ ९५ ॥

आशैलादुदयात्तथास्तगिरितो भास्वद्यशोराशिभिः
व्याप्तं विश्वमनन्धकारमभवद्यस्य स्म शिष्यैरिदम् ।
आराद् ज्ञानगभस्तिभिः प्रतिहतश्चन्द्रायते भास्करः
तस्मै शङ्करभानवे तनुमनोवाग्भिर्नमः स्यात्सदा ॥ ९६ ॥

नमाम्यभोगिपरिवारसंपदं निरस्तभूतिमनुमार्धविग्रहम् ।
अनुग्रमुन्मृदितकाललाञ्छनं विनाविनायकमपूर्वशङ्करम् ॥ ९७ ॥

यद्वक्त्रमानससरःप्रतिलब्धजन्मभाष्यारविन्दमकरन्दरसं पिबन्ति ।
प्रत्याशमुन्मुखविनीतविनेयभृङ्गाः तान् भाष्यवित्तकगुरून् प्रणमामि मूर्ध्ना ॥ ९८ ॥

वेदान्तोदरवर्ति भास्वदमलं ध्वान्तच्छिदस्मद्धियो
दिव्यं ज्ञानमतीन्द्रियेऽपि विषये व्याहन्यते न क्वचित् ।
यो नो न्यायशलाकयैव निखिलं संसारबीजं तमः
प्रोत्सार्याविरकार्षीत् गुरुगुरुः पूज्याय तस्मै नमः ॥ ९९ ॥

न स्तौमि तं व्यासमशेषमर्थं सम्यङ् न सूत्रैरपि यो बबन्ध ।
विनापि तैः संग्रथिताखिलार्थं तं शङ्करं नौमि सुरेश्वरञ्च ॥ १०० ॥

इति श्रीशङ्करविजयमकरन्दसारे दशम आस्वादः समाप्तः ॥

## ॥ एकादश आस्वादः ॥

### आचार्याणां तीर्थयात्रा ।

अथ कान्यकुमारसन्धिसेतुस्थलिर्निवेङ्कटकालहस्तियातुः ।
यमिनेतुरमुष्य काञ्चियात्रा शमिदानीं शमदं क्रियाद् विचित्रा ॥ १ ॥

सुरेश्वराचार्य सरस्वतीं त्वं संपूजयन्नास्स्व चिरादिहेति ।
दत्त्वाऽभ्यनुज्ञां विनताय तस्मै शिष्यैः समस्तैः स जगाम काञ्चीम् ॥ २ ॥

सुरेश्वरोऽपि तत्रैव वसन् गुरुवराज्ञया ।
शिष्यानध्यापयन्नास्त यतीन् पृथ्वीधरादिकान् ॥ ३ ॥

तत्र पृथ्वीधराचार्यं प्रतिष्ठाप्य सुरेश्वरः ।
जगाम काञ्चीं प्रयतो गुरुवर्यदिदृक्षया ॥ ४ ॥

शङ्करः प्रस्थितः कन्याकुमारीक्षेत्रमाययौ ।
तपस्यन्तीं कुमारीं तां पार्वतीं समुपास्त च ॥ ५ ॥

लीलालब्धस्थापितलुप्ताखिललोकां लोकातीतैर्योगिभिरन्तश्चिरमृग्याम् ।
बालादित्यश्रेणिसमानद्युतिपुञ्जां गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ६ ॥

इति स्तुवन् प्रणम्यैनां कुमारीं त्र्यक्षरीमयीम् ।
वराभीतिकरां देवीं जयन्तीनगरं ययौ ॥ ७ ॥

दक्षिणाब्धेस्तटे रम्ये कृतालयमुमासुतम् ।
श्रीसन्धिनगरेशानं साग्रजं प्राणमत्ततः ॥ ८ ॥

यथाऽब्धेस्तरंगा लयं यान्ति तुंगाः तथैवापदः सन्निधौ सेवतां मे ।
इतीवोर्मिपंक्तीर्नृणां दर्शयन्तं सदा भावये हृत्सरोजे गुहं तम् ॥ ९ ॥

गिरौ मन्निवासे नरा येऽधिरूढाः तदा पर्वते राजते तेऽधिरूढाः ।
इतीव ब्रुवन् गन्धशैलाधिरूढः स देवो मुदे मे सदा षण्मुखोऽस्तु ॥१०॥

विशालेषु कर्णान्तदीर्घेष्वजस्रं दयास्यन्दिषु द्वादशस्वीक्षणेषु ।
मयीषत्कटाक्षः सकृत्पातितश्चेत् भवेत्ते दयाशील का नाम हानिः ॥११॥

इत्थं गुहार्पितस्वान्तो भक्तियुक्तः प्रणम्य तम् ।
निर्जगाम ततः सिन्धुतीरतीर्थाटनाय सः ॥ १२ ॥

अथ देशिकेन्दुरधिगत्य तैर्थिकैः शनकैरनन्तशयनाभिधं स्थलम् ।
समवैक्षतात्र सरसीरुहेक्षणं श्रुतिचूलिकासमधिगम्यवैभवम् ॥ १३ ॥

मुनिकुञ्जरस्य ववृधेऽधिमानसं प्रमदांबुराशिलहरीभरैश्चिरम् ।
मुमुदे च लोचनचकोरपत्त्रिणा पुरतः स्फुरत्युरुतमोहरे विधौ ॥ १४ ॥

अथ माधवं शुभतमालकाननं महनीयगन्धवनमालिकोज्ज्वलम् ।
उपलभ्य कोकिलयुवेव कन्दलन्मधुरस्वरः समजनिष्ट देशिकः ॥ १५ ॥

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् ।
यस्मिन्दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥ १६ ॥

अथ देवदेवनुतिपावनाननो यतिशेखरो यतमना इतस्ततः ।
अतिपावनानि परितस्तपोवनान्यनघा नदीरभियंयौ सरांसि च ॥ १७ ॥

जनता हि यत्र कृतमालिकाऽऽपगाजलपानजातजडिमापनुत्तये ।
रसनाञ्चले मधुरसं क्षिपत्यसौ मधुरामवापदथ तामनुत्तमाम् ॥ १८ ॥

कृतमालिकाकृतजलावगाहनः क्रमशः क्रियाः समुचितास्समाचरन् ।
शतशः प्रणम्य शशिखण्डनं मुखरोऽजनिष्ट मुनिशेखरो मुदा ॥ १९ ॥

स्वसेवासमायातदेवासुरेन्द्रानमन्मौलिमन्दारमालाभिषिक्तम् ।
नमस्यामि शम्भो पदांभोरुहं ते भवांभोधिपोतं भवानीविभाव्यम् ॥ २० ॥

अधिहेमपुष्करिणि क्लृप्तमज्जनो भसितत्रिपुण्ड्रपरिदीपितालिकः ।
अभिवन्द्य मीननयनामसावभूत् कवितात्मना परिणतात्मभक्तिकः ॥२१॥

उद्यद्भानुसहस्रकोटिसदृशां केयूरहारोज्ज्वलां
बिम्बोष्ठीं स्मितदन्तपङ्क्तिरुचिरां पीताम्बरालङ्कृताम् ।
विष्णुब्रह्मसुरेन्द्रसेवितपदां तत्वस्वरूपां शिवां
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारां निधिम् ॥ २२ ॥

मीनाक्षीं पूजयित्वाऽथ मीनाक्षीशासनादथ ।
सूक्ष्मरूपयुते रत्ने सूक्ष्मरूपेण यन्त्रकम् ॥ २३ ॥

श्रीचक्रं तु विलिख्याथ नासिकाभरणं च तत् ।
आवाह्य च परां शक्तिं तस्मिन्संपूज्य यत्नतः ।
मीनाक्ष्या अर्पयामास नासिकायां जगद्गुरुः ॥ २४ ॥

अनुदिनमिति देवीमर्चयन् वाक्प्रसूनैः
अविरतसुमरोचैः सौरभीसौलभीकैः ।
निगमशिखरचिन्तानिर्वृतो निर्व्यलीकैः
बहुदिनमिह वासं बह्वमंस्तार्यपादः ॥ २५ ॥

शेखरोऽथ यमिनां सहानुगैः सेतुदर्शनकुतूहलाद्व्रजन् ।
सिन्धुबन्धुतटसीम्नि राघवं दर्भपूलकृततल्पमस्तुत ॥ २६ ॥

विशुद्धं परं सच्चिदानन्दरूपं गुणाधारमाधारहीनं वरेण्यम् ।
महान्तं विभान्तं गुहान्तं गुणान्तं सुखान्तं स्वयं धाम रामं प्रपद्ये ॥२७॥

महारत्नपीठे शुभे कल्पमूले सुखासीनमादित्यकोटिप्रकाशम् ।
सदा जानकीलक्ष्मणोपेतमेकं सदा रामचन्द्रं भजेऽहं भजेऽहम् ॥ २८ ॥

सदा राम रामेति नामामृतं ते सदाराममानन्दनिष्यन्दकन्दम् ।
पिबन्तं नमन्तं सुदन्तं हसन्तं हनूमन्तमन्तर्भजे तं नितान्तम् ॥ २९ ॥

वीताखिलविषयेच्छं जातानन्दाश्रुपुलकमत्यच्छम् ।
सीतापतिदूताद्यं वातात्मजमद्य भावये हृद्यम् ॥ ३० ॥

इत्थं ककुत्स्थनृपतेर्यशांसि संकीर्तयन्नघहराणि स संयमीन्द्रः ।
सिन्धौ निमज्ज्य सह पर्वतवर्धनीशं श्रीरामनाथमभिवन्द्य ततस्तमस्तौत् ॥

श्रीताम्रपर्णीजलराशियोगे निबद्ध्य सेतुं निशि बिल्वपत्रैः ।
श्रीरामचन्द्रेण समर्चितं तं रामेश्वराख्यं सततं नमामि ॥ ३२ ॥

अभवत्किल तस्य तत्र शाक्तैः गिरिजार्चाकपटान्मधुप्रसक्तैः ।
निकटस्थवितीर्णभूरिमोदस्फुटरिंखत्पटुयुक्तिमान् विवादः ॥ ३३ ॥

स हि युक्तिभरैर्विधाय शाक्तान् प्रतिवाग्व्याहरणेऽपि तानशक्तान् ।
द्विजजातिबहिष्कृताननार्यानकरोल्लोकहिताय कर्मसेतुम् ॥ ३४ ॥

रामेश्वराद्विनिष्क्रम्य ततो देशिकपुङ्गवः ।
शिष्यैः परिवृतो मार्गे वक्रतुण्डपुरीमगात् ॥ ३५ ॥

स्नात्वा गन्धवतीतोये गजाननमपूजयत् ।
पञ्चरत्नभुजङ्गाख्यस्तोत्राभ्यां तोषयंश्च तम् ॥ ३६ ॥

मुदा करात्तमोदकं सदा विमुक्तिसाधकं
कलाधरावतंसकं विलासिलोकरक्षकम् ।

अनायकैकनायकं विनाशितेभदैत्यकं
नताशुभाशुनाशकं नमामि तं विनायकम् ॥ ३७ ॥

वक्रतुण्डं समाराध्य वक्रतुण्डपुरोत्तमे ।
निर्वृतः प्रययौ चोलान् कावेरीसलिलाप्लुतान् ॥ ३८ ॥

गच्छन्नध्वनि कावेरीं सरितं सन्ददर्श सः ।
यस्यां स्नात्वा हरौ भक्तिं मुक्तिदां यान्ति मानवाः ॥ ३९ ॥

यस्याः पावनतोयाया मध्ये स्वर्णमयं महत् ।
क्षेत्रमाभाति विख्यातं लोके श्रीरंगसंज्ञया ॥ ४० ॥

तत्र स्नात्वा यतीन्द्रस्तं सशिष्यः कमलापतिम् ।
ददर्श भोगिशय्यायां भान्तं श्रीरंगनायकम् ॥ ४१ ॥

नत्वा तस्य पदांभोजे रमाकान्तस्य शङ्करः ।
अर्चयित्वा ततोऽस्तौत्तं पद्मपादादिभिर्युतः ॥ ४२ ॥

आनन्दरूपे निजबोधरूपे ब्रह्मस्वरूपे श्रुतिमूर्तिरूपे ।
शशाङ्करूपे रमणीयरूपे श्रीरङ्गरूपे रमतां मनो मे ॥ ४३ ॥

तदालयवरिष्ठेऽथ जनाकर्षणसंज्ञकम् ।
यन्त्रं निधाय बिंबस्याधस्तात् जम्बूवनं ययौ ॥ ४४ ॥

गजारण्ये जम्बुनाथमम्मयं लिङ्गमुत्तमम् ।
मुदमापाखिलाण्डेश्या युतं तत्प्रणमन्मुहुः ॥ ४५ ॥

देव्याश्च सन्निधौ योगी ध्याननिष्ठो बभूव सः ।
ध्यानस्थं भगवत्पादं प्रावदत्परमेश्वरी ॥ ४६ ॥

श्रीचक्रयुतताटङ्के नवरत्नविचित्रिते ।
कारयित्वा विधानेन मम कर्णौ विभूषय ॥ ४७ ॥

एवं देव्या वचः श्रुत्वा शङ्करो हृष्टमानसः ।
श्रीचक्रयन्त्रवद्रत्नैः स्वर्णैश्च बहुशोभितम् ॥ ४८ ॥

ताटङ्कयुगलं दीप्तं शिवशक्तिस्वरूपकम् ।
कारयित्वा विधानेन महोत्सवपुरस्सरम् ॥ ४९ ॥

सुदिनेऽथ सुलग्नाढ्ये भूषयामास चाम्बिकाम् ।
मातृभूतेश्वरं गत्वा स्नात्वा शिष्यसमन्वितः ॥ ५० ॥

कावेर्यां पूजयामास गिरिमूर्ध्नि सुसंस्थितम् ।
पूजयामास विघ्नेशं पुष्टिलक्ष्मीसमन्वितम् ॥ ५१ ॥

मातृभूतेश्वरं शम्भुं सुगन्धिकुन्तलाम्बिकाम् ।
उवास दिनमेकं तु मातृभूतस्थले सुखम् ॥ ५२ ॥

अखिलाण्डेश्वरीसद्मनिलयाः पूजका द्विजाः ।
प्रणम्य भगवत्पादं प्रार्थयामासुरेव ते ॥ ५३ ॥

अत्युग्ररूपा सञ्जाता ताटङ्कादिविभूषिता ।
अखिलाण्डेश्वरी देवी दह्यन्ते सन्निधौ स्थिताः ॥ ५४ ॥

वयं तया पीड्यमानाः न शक्ताः पूजने विभो ।
उग्रत्वशमनं देव्याः कुरु देव नमोऽस्तु ते ॥ ५५ ॥

गुरोस्तु शासनादेव सुधन्वा नृपसत्तमः ।
मूर्तिं भव्यां चकारासौ गणेशानस्य शिल्पिभिः ॥ ५६ ॥

तां मूर्तिं स्थापयामास देव्या अभिमुखीं गुरुः ।
पुत्रं वीक्ष्य परा शक्तिः पुरतस्तं गणेश्वरम् ॥ ५७ ॥

शान्ता सद्यो बभूवाथ तुष्टोऽभूच्च जगद्गुरुः ।
संपूज्य देवीतनयं तदादि पुरतः स्थितम् ॥ ५८ ॥

देव्याः सपर्यां व्यदधुः श्रीविद्यार्चनतत्पराः ।
अखिलाण्डेश्वरीमस्तौत् ध्यायन्मनसि शङ्करः ॥ ५९ ॥

लूताधीशगजेन्द्रपूजितपदे लूनाहितेशान्विते
क्लींकाराङ्कितबिन्दुपीठनिलये क्लींकाररूपेडिते ।
लूतातन्तुजडीकृतेशनिलये लूनाहिवल्लीदले
लूताक्ष्मापतिमुक्तिदातृमहिले वन्देऽखिलाण्डेश्वरि ॥ ६० ॥

जम्बूमूलनिधे जनार्दननुते जम्भारिसंभाविते
जम्बूद्वीपमनोज्ञकल्पलतिके जह्न्वात्मजाशेखरे ।
जन्मव्याधिजरापहे जलमये जाम्बूनदालङ्कृते
जम्बूनाथमनोहरे जननुते वन्देऽखिलाण्डेश्वरि ॥ ६१ ॥

यज्ञे यज्ञफलप्रदे यमिनुते यज्ञेश्वराराधिते
यक्ष्मघ्ने यमसूदनप्रियतमे यज्ञेशसंपूजिते ।
यन्त्रस्थे यतिपूजिते यतिकृतश्रीचक्रभूषोज्ज्वले
यक्षिण्यादिसमस्तशक्तिविनुते वन्देऽखिलाण्डेश्वरि ॥ ६२ ॥

नत्वैवमखिलाण्डेशीं तदाराधननिर्भरः ।
निनाय समयं कञ्चित् ततो मध्यार्जुनं ययौ ॥ ६३ ॥

इति श्रीशङ्करविजयमकरन्दसारे एकादश आस्वादः समाप्तः ॥

## ॥ द्वादश आस्वादः ॥

### तीर्थक्षेत्रयात्रा ।

श्रीगुरुं भगवत्पादं शरण्यं भक्तवत्सलम् ।
शिवं शिवकरं शुद्धमप्रमेयं नमाम्यहम् ॥ १ ॥

संप्राप्तसन्तोषविनीतशिष्यैः साकं जगत्यां विजयं विधित्सुः ।
अद्वैतसिद्धान्तसरोजसूर्यो मध्यार्जुनेशावसथं ययौ सः ॥ २ ॥

तं पूजयित्वाऽनुचरैः सभायां पप्रच्छ तत्त्वं किमिहेति योगी ।
दृश्याकृतिप्रोच्चभुजोऽथ सत्यमद्वैतमेवेत्यवदत्त्रिरीशः ॥ ३ ॥

तत्क्षेत्रवासिनः सर्वान् प्रातःस्नानपरायणान् ।
पञ्चयज्ञपरान्नित्यं देवतातिथिपूजकान् ॥ ४ ॥

उमागणपतीशार्काच्युतांघ्र्यर्चापरायणान् ।
त्यक्तभेदकथानाशु वेदान्तपरिनिष्ठितान् ॥ ५ ॥

विधाय देशिकेन्द्रोऽसौ प्रसाद्य च महेश्वरम् ।
निर्जगाम ततः शिष्यैः पद्मपादादिभिर्वृतः ॥ ६ ॥

ततोऽमृतघटेशानं मृत्युञ्जयमुमापतिम् ।
अस्तौन्मृकण्डुतनयानुग्रहार्थात्तविग्रहम् ॥ ७ ॥

संसारे जनितापरोगसहिते तापत्रयाक्रन्दिते
  नित्यं पुत्रकलत्रवित्तविलसत्पाशैर्निबद्धं दृढम् ।
गर्वान्धं बहुपापवर्गसहितं कारुण्यदृष्ट्या विभो
  श्रीमृत्युञ्जय पार्वतीप्रिय सदा मां पाहि सर्वेश्वर ॥ ८ ॥

स्तुतिं ध्यानमर्चां यथावद्विधातुं भजन्नप्यजानन् महेशावलम्बे ।
त्रसन्तं सुतं त्रातुमग्रे मृकण्डोः यत्प्राणनिर्वापणं त्वत्पदाब्जम् ॥ ९ ॥

क्षेत्रे ब्रह्मश्मशानाख्ये पुण्यारण्येऽतिविश्रुते ।
अघोरदेवो भगवानुग्ररूपो व्यराजत ॥ १० ॥

न प्राभवत्पूजनाय पूजकोऽपि सुदीक्षितः ।
प्रतिष्ठाप्य पुरः काली शान्तं तमकरोद्गुरुः ॥ ११ ॥

ततो भिक्षुवरः पुण्यं पुण्डरीकपुरं ययौ ।
ताण्डवं कुरुते यस्मिन् महादेवो महानटः ॥ १२ ॥

यन्नृत्तमभिरामं सा पार्वती च धृतादरा ।
वीक्षते मुनिवृन्दं च दर्शनाद्भयभञ्जनम् ॥ १३ ॥

श्रीशङ्करमुखाः स्नात्वा शिवगङ्गाजले शुचौ ।
हर शम्भो महादेव देवदेव दयानिधे ।
अस्मान्भक्तिसमायुक्तान् उद्धराशु भवार्णवात् ॥ १४ ॥

इति विहितनुतिर्गिरीशचूडाशशिकिरणापसरत्तमःप्ररोहः ।
त्रिचतुरदिवसान्वसन्निहासौ मुनिपतिरुत्तरदिङ्मुखः प्रतस्थे ॥ १५ ॥

ततः श्रीशङ्कराचार्यो वेङ्कटेश्वरमीक्षितुम् ।
शिष्यैस्तैस्स समायुक्तो निर्जगाम महोदयः ॥ १६ ॥

गत्वा क्रमेण मार्गस्थक्षेत्राणि प्रविलोकयन् ।
नत्वा गोविन्दराजेशं भक्ताभीष्टफलप्रदम् ॥ १७ ॥

प्रदक्षिणं परिक्रामन् शेषाचलमतन्द्रितः ।
गिरेरूर्ध्वं समारुह्य स्नात्वा पुष्करिणीजले ॥ १८ ॥

अथ श्रीवेङ्कटेशानं सप्तगिर्यधिवासिनम् ।
स्वामिपुष्करिणीतीरे सवराहं ददर्श सः ॥ १९ ॥

शुचिः शिष्यैः परिवृतो विधिवत्प्रणनाम तम् ।
तुष्टाव पश्यन्निभृतं रूपमापादमूर्धजम् ॥ २० ॥

वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां
कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः ।
कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखांभोरुहां सुन्दराङ्गीं
वन्दे वन्द्यामशेषैरपि मुरभिदुरोमन्दिरामिन्दिरां ताम् ॥ २१ ॥

येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गैः
येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः ।
नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः
पद्माक्षस्यांघ्रिपद्मद्वयतलनिलयाः पांसवः पापपङ्कम् ॥ २२ ॥

मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः
काकुत्स्थः कंसघाती मनसिजविजयी यश्च कल्किर्भविष्यन् ।
विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः
पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥ २३ ॥

श्रीवेङ्कटेशवृषशैलमुपेत्य योगी यन्त्रं जगत्त्रयवशीकरणोद्यतं तत् ।
चक्रे चराचरगुरुर्जगतां विभूत्यै श्रीशङ्करो निगमशेखरपारगोऽयम् ॥ २४ ॥

अद्रौ बिंबादधोभागे यन्त्रं संपत्प्रदायकम् ।
षडास्यविष्णुलक्ष्मीनां धनाकर्षणसंज्ञकम् ॥ २५ ॥

कारयित्वा शिलायां च स्थापयामास शङ्करः ।
तत्र कश्चिद्द्विजवरो वैराग्यादिगुणान्वितः ॥ २६ ॥

श्वित्रेण सर्वाङ्गीणेन कूष्माण्डसदृशाकृतिः ।
निलीयमानः सदसि प्राक्तनं स्वमघं स्मरन् ॥ २७ ॥

पर्यश्रुनयनः प्राह प्रणमन्गुरुपादयोः ।
मादृशामघिनां ब्रह्मन् अन्धे तमसि मज्जताम् ॥ २८ ॥

तरणिस्त्वं निसृष्टोऽसि पाहि मां करुणानिधे ।
इति शोचन्तमाश्वास्य चाक्षुष्या दीक्षया गुरुः ॥ २९ ॥

अनुगृह्याबभाषे तं महात्मन् सौम्य मा शुचः ।
न त्वं देहो न च प्राणो नेन्द्रियं न मनो न धीः ॥ ३० ॥

स्वयंज्योतिस्त्वमात्मासि शरीराद्यवभासकः ।
कथमस्मि स्वयंज्योतिः कथमस्म्यवभासकः ।
इति पृच्छन्तमेकेन श्लोकेन प्रत्यबोधयत् ॥ ३१ ॥

किं ज्योतिस्तव भानुमानहनि मे रात्रौ प्रदीपादिकं
स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे ।
चक्षुस्तस्य निमीलनादिसमये किं धीर्धियोदर्शने
किं तत्राहमतो भवान्परमकं ज्योतिस्तदस्मि प्रभो ॥ ३२ ॥

इति प्रबोधितस्तत्त्वं गुरुणा करुणाब्धिना ।
देहाभिमानजं दुःखं विमुच्य मुदमाप सः ॥ ३३ ॥

दक्षिणां दिशमुत्सृज्य प्रस्थितो देशिकेश्वरः ।
गत्वा बहुविधान्देशान् स्नात्वा तीर्थजलेषु सः ॥ ३४ ॥

श्रीकालहस्तिसंज्ञं तत्क्षेत्रं त्रैलोक्यविश्रुतम् ।
संप्राप गिरिजाभर्तुः महापातकनाशनम् ॥ ३५ ॥

तत्र तीर्थजले स्नात्वा संयुतश्शिष्यमण्डलैः ।
उपेत्य सन्निधिं देवमद्राक्षीद्गिरिजापतिम् ॥ ३६ ॥

नानादीपप्रभाजालनिर्धूततिमिरोदरे ।
अद्भुते भवने भान्तं प्रभामण्डलमण्डितम् ॥ ३७ ॥

दृष्ट्वा तं शङ्करो देवं भवान्या सह भक्तिमान् ।
स्तुत्वा चोपनिषद्वाक्यैः ननाम शिरसा भृशम् ॥ ३८ ॥

श्रीमदात्मने गुणैकसिन्धवे नमः शिवाय
धामलेशधूतकोकबन्धवे नमः शिवाय ।
नामशेषितानमद्भवान्धवे नमः शिवाय
पामरेतरप्रधानबन्धवे नमः शिवाय ॥ ३९ ॥

देवं प्रणम्य गिरिशं कालहस्तीशमादरात् ।
ज्ञानप्रसूनामस्तौत्स शम्भुप्रणयिनीं शिवाम् ॥ ४० ॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि बद्धतृष्णम् ॥ ४१ ॥

कञ्चित्कालमुषित्वाऽत्र शम्भुपूजापरायणः ।
काञ्चीं मोक्षपुरीं प्राप शक्तित्रयसुरक्षिताम् ॥ ४२ ॥

पृथिव्या गोस्वरूपाया यत्काञ्चीस्थानतां गतम् ।
तस्मात्क्षेत्रमिदं पुण्यं काञ्चीक्षेत्रं प्रचक्षते ॥ ४३ ॥

विष्णुनाऽधिष्ठितं क्षेत्रं शिवसान्निध्यकारकम् ।
महाशक्तिप्रभावाढ्यं शक्तिप्राधान्यवैभवात् ॥ ४४ ॥

विनाशरहितं क्षेत्रं तस्मात्सत्यव्रताह्वयम् ।
सरिच्छैलालयांकैश्च क्षेत्रं भास्करसंज्ञितम् ॥ ४५ ॥

यावत्तुण्डीरभूवृत्तं तावत्काञ्चीतलं स्मृतम् ।
तन्मध्यगामिनी क्षीरसरिच्छ्रेष्ठा महानदी ॥ ४६ ॥

श्रीविद्यापरमेशान्याः स्तनकुम्भसमुद्भवा ।
तन्नद्याश्चोत्तरे पार्श्वे पादयोजनमात्रतः ॥ ४७ ॥

काञ्चीक्षेत्रं तपःस्थानं प्रागुक्तं तत्र वर्तते ।
तस्मिन्क्षेत्रे महाशक्तिः त्रिधा रूपेण वर्तते ॥ ४८ ॥

तत्र काञ्चीमहाक्षेत्रे त्वव्यक्तज्योतिरात्मकः ।
स शिवश्शङ्करः शम्भुः महाप्रलयके विभुः ॥ ४९ ॥

चूतबीजाकृतिर्भूत्वा बभावेकाम्रसंज्ञया ।
तथैव भगवान्विष्णुः तेजसा व्यक्तविग्रहः ।
ब्रह्माश्वमेधयागाग्नौ बभौ वरद इत्यपि ॥ ५० ॥

तस्माद्विष्णुमहादेवौ कामाक्षीशक्तिरेव च ।
तस्या विलासस्त्रिविधो हरिशक्तीशभेदतः ॥ ५१ ॥

कामाक्षीति परा शक्तिः सांख्यायनमहामुनेः ।
तपसा स्वयमुद्भूता यत्रैकाम्रेश्वरप्रिया ॥ ५२ ॥

कटाक्षपूरविप्रुड्भिः जीववर्गांश्चतुर्विधान् ।
यथार्हमनुगृह्णाति चतुर्वर्गफलोदयैः ॥ ५३ ॥

पञ्चतीर्थसरस्तीरे कामकोष्ठमहीतले ।
सिद्धतीर्थस्य चेशाने तृतीयांशे महाबिलम् ॥ ५४ ॥

जगत्कामकलाकारं भूमेः कुण्डलिनीपदम् ।
यावन्महाबिलं तत्र तावन्मण्डपतां गतम् ॥ ५५ ॥

तत्कामनगरं दिव्यमघघ्नं सर्वसिद्धिदम् ।
तपःस्थानं बिलं सूक्ष्मं परमं व्योम तत्स्मृतम् ॥ ५६ ॥

कामकोटिस्स्मृतस्सोऽयं कारणादेव चिन्नभः ।
यत्र कामकृतो धर्मो जन्तुना येन केन वा ॥ ५७ ॥

सकृद्वाऽपि सुधर्माणां फलं फलति कोटिशः ।
तेनेदं कामकोटीति बिलद्वारं प्रसिद्धिमत् ॥ ५८ ॥

तत्तत्कामप्रदत्वाच्च कामकोष्ठमुदाहृतम् ।
आकाशशरीरं ब्रह्म सनादं बिन्दुसंज्ञितम् ॥ ५९ ॥

बिलरूपेण वै काञ्च्यां प्रत्यक्षं मोक्षदं पुरम् ।
अथापि रुद्रनेत्राग्निनिर्दग्धः काम एकतः ॥ ६० ॥

स सृष्टो लीलया मात्रा नेत्राभ्यां कोटिसंख्यया ।
कामकोटीति विख्यातं काञ्च्यां यच्चिन्मयं नभः ॥ ६१ ॥

अथ कामस्तृतीयोऽर्थः पुरुषार्थेषु विश्रुतः ।
तत्परस्ताच्छ्रुतो मोक्षः कोटिशब्देन शब्दितः ॥ ६२ ॥

कामकोटिः श्रुतो मोक्षः पुरुषार्थचतुर्थकः ।
अर्थोऽथवा स्मृतः कामः कामेशो धनदः स्मृतः ।
तत्कोटिदा पीठशक्तिः कामकोटीति विश्रुता ॥ ६३ ॥

अथ तत्र सुविख्याते कामकोष्ठधरातले ।
गायत्रीमण्टपे तत्र बिलपीठासने शुभे ॥ ६४ ॥

गायत्र्योंकारकोणे सा कामाक्षी विश्वकारणम् ।
पद्मासने निषण्णासौ कामपीठनिवासिनी ॥ ६५ ॥
पाशांकुशेक्षुकोदण्डपञ्चबाणलसत्करा ।
तपनोडुपताटंका मीनकुण्डलधारिणी ॥ ६६ ॥
श्रीचक्रनगराधीशा श्रीविद्या परमेश्वरी ।
सचामररमावाणीसव्यदक्षिणसेविता ॥ ६७ ॥
कामकोटीति विख्याता कामाक्षी कामदायिनी ।
महाकामेशमहिषी महात्रिपुरसुन्दरी ॥ ६८ ॥
पञ्चाशत्कोटिविस्तीर्णे वर्तन्ते पृथिवीतले ।
कामकोटिमहापीठान्युत्तमानि हि तेष्वपि ॥ ६९ ॥
चतुष्पष्टिसहस्राणि तेषु चाष्टाष्टकानि हि ।
मातृकासंख्यया तेषु तेषु तत्त्वानुसंख्यया ॥ ७० ॥
तेषु चाष्टादश श्रेष्ठान्येषु पीठत्रयं वरम् ।
तत्त्रये कामराजाख्यं प्रथमं हि प्रशस्यते ॥ ७१ ॥
तत्पीठे वाग्भवं कूटं हयग्रीवेण पूजितम् ।
जालन्धराख्यं द्वितीयं मध्यकूटं मनोभवम् ॥ ७२ ॥
भृगुणाऽभ्यर्चितं पीठं ज्वालामुख्यां तु तद्विदुः ।
ओड्याणाख्यं तृतीयं तु पराबीजस्वरूपकम् ॥ ७३ ॥
तत्पीठं कामरूपेऽस्ति व्यासेनोपासितं सदा ।
प्रागुक्तं कामराजाख्यं काञ्चीक्षेत्रे हि वर्तते ॥ ७४ ॥
तां पुरीं कामराजाङ्कमध्यगेश्या सुरक्षिताम् ।
सप्तमोक्षपुरीष्वन्यतमां प्राप स शङ्करः ॥ ७५ ॥

इति श्रीशङ्करविजयमकरन्दसारे द्वादश आस्वादः समाप्तः ॥

## ॥ त्रयोदश आस्वादः ॥

### काञ्चीक्षेत्रे शिवकाञ्ची-विष्णुकाञ्चीपुरनिर्माणं एकाम्रेश्वर-वरदराज-कामाक्ष्यालयनिर्माणं च ।

श्रितनिर्मलराजसेनचोलक्षितिपालोद्धृतविप्रदेवशालः ।
वरदस्य तथाऽऽम्रनायकस्याप्युरुवेशमद्वयकृज्जयाय मे स्यात् ॥ १ ॥

प्रकृतिं च गुहाश्रयां महोग्रां स्वकृते चक्रवरे प्रवेश्य योऽयम् ।
अकृताश्रितसौम्यमूर्तिमार्यां सुकृतं वः स चिनोतु शङ्करार्यः ॥ २ ॥

ईशानविष्ण्वोरभिधानयुग्मात्काञ्चीनगर्यौ समकारयत्सः ।
कामाक्ष्यभिख्यारमणीयमूर्तेः देव्याः प्रतिष्ठां मुनिराडकार्षीत् ॥ ३ ॥

सर्वज्ञः शिष्यसंयुक्तः शङ्करो देशिकेश्वरः ।
भूमिं प्रदक्षिणीकृत्य ततः काञ्चीपुरं गतः ॥ ४ ॥

जम्बूद्वीपस्य कुर्वाणे शोभां भारतमण्डले ।
शस्तं काश्मीरनामानं देशं विद्योतयद्भृशम् ।
कामाक्ष्या नाम वाग्देव्याः स्थानं तत्पुरमासवान् ॥ ५ ॥

पयोऽवगाह्याथ पयोनदीमवं जगाम सत्यव्रतमिन्दिरास्पदम् ।
रमाधरास्वादरतोऽपि माधवो वपारसं यत्र स बह्वमन्यत ॥ ६ ॥

सरस्यथामज्ज्य समाचरन् क्रियाः निरस्य मोहं निबिडं तपोनिधिः ।
स पुण्यकोटीनिलयं समाश्रयन् स पुण्यकोटीनिलयं स्वमप्यवैत् ॥ ७ ॥

स मस्करी काञ्चिपुरीं गरीयसीमथ क्षितेरद्भुतकाञ्चिमैक्षत ।
असावशेषश्रुतिनीविरादरात् पुरारिराराधयते चिराय याम् ॥ ८ ॥

त्रयी यदद्वैतरसालवल्लिकाऽप्यनेकशाखोपचितात्मके उभे ।
तयोरियत्येव भिदादिमा स्फुरत्फला मूर्ध्नि परा तु मूलतः ॥ ९ ॥

कुतूहलेनाथ कुलाद्रिकन्यकाकुचाग्रसीमैणमदेन मुद्रितम् ।
महोनिधिं तत्र महाद्रिसंगतं विलोकयन्नित्थमसौ व्यजिज्ञपत् ॥ १० ॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।
दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्तवृत्तिममलामन्यैस्तु किं कर्मभिः ॥ ११ ॥

सिद्धामृतसरःपार्श्वे तत्रातिष्ठज्जगद्गुरुः ।
आचार्यवैभवं श्रुत्वा सर्वे चागत्य देशिकम् ॥ १२ ॥

धृताञ्जलिपुटा भक्त्या प्रार्थयामासुरादरात् ।
अस्मिन्स्थले पद्मजेन कामाक्षी जगदम्बिका ॥ १३ ॥

भण्डासुरेन्द्रहन्त्री सा योगिनीवृन्दसेविता ।
ललिता परमेशानी पूजिता स्थापिताऽपि च ॥ १४ ॥

ब्रह्मप्रार्थनया ह्यत्र विले वासं करोति च ।
महाकाली महालक्ष्मीस्तथा देवी सरस्वती ॥ १५ ॥

वसन्ति देवीसेवार्थं विलमध्ये च शङ्कर ।
रात्रौ विलान्महाकाली बहिर्वीथीगता जनान् ॥ १६ ॥

स्वदृष्टिगान्भक्षयति क्षीयन्ते पुरवासिनः ।
तथा कुरु विलादेषा नागच्छेच्च बहिर्यथा ॥ १७ ॥

इति तं प्रार्थयामासुस्तथेत्याह यतीश्वरः ।
चकार स्तम्भनं काल्या विलमध्ये स मन्त्रवित् ॥ १८ ॥

राजसेनेन सुमहत्पृथग्देवालयत्रयम् ।
प्राकरगोपुराद्याढ्यं दिव्यगर्भगृहोज्ज्वलम् ॥ १९ ॥

अर्धमण्टपसंशोभि मणिमण्टपमण्डितम् ।
कारयामास सर्वज्ञः सर्वलक्षणलक्षितम् ॥ २० ॥

तथा पूजोत्सवादींश्च तत्र तत्र प्रवर्तयन् ।
भक्तिं प्रवर्धयामास जनानामधिकाधिकम् ॥ २१ ॥

शिवकाञ्चीति तत्रैकां एकाम्रेशकृताश्रयाम् ।
नाम्ना तत्रैव कामाक्ष्याः पार्श्वे प्रासादमुन्नतम् ॥ २२ ॥

विष्णुकाञ्चीति नाम्नाऽन्यां वरदाधिष्ठितां पुरीम् ।
यथोक्तां कारयामास सर्वलक्षणलक्षिताम् ॥ २३ ॥

तां सर्वां नगरीं पश्यन् सर्वसंपत्समन्विताम् ।
प्रहर्षमतुलं लेभे देशिकेन्द्रोऽपि मानसे ॥ २४ ॥

### कामाक्ष्याः पुरतः श्रीचक्रप्रतिष्ठा ।

दुर्वासास्तु मुनिश्रेष्ठो देवीपूजनतत्परः ।
शङ्करं भगवत्पादं प्रावदत्प्रीतिपूर्वकम् ॥ २५ ॥

अस्मिन्क्षेत्रे परां देवीं कामाक्षीं बिलवासिनीम् ।
आराधयन्पञ्चदशीं जपंस्तिष्ठामि सर्वदा ॥ २६ ॥

बिलोपरि मया देव्या मूर्तिस्तु स्थापिता पुरा ।
श्रीचक्रं स्थापय त्वं तु कामाक्षीप्रीतयेऽनघ ॥ २७ ॥

कामकोटीपीठ इति ख्यातिं यातु जगत्तले ।
इत्युक्त्वा तं समालिंग्य दुर्वासाश्च तिरोऽभवत् ॥ २८ ॥

कामाक्ष्याः पुरतो भूमौ कामकोटीति विश्रुतम् ।
भगवान्भगवत्पादः श्रीचक्रं स्वयमालिखत् ॥ २९ ॥

आज्ञया गुरुनाथस्य राजसेनो महीपतिः ।
कामाक्ष्याः स्वर्णमूर्तिञ्च रमावाणीसमन्विताम् ॥ ३० ॥

सुरम्यां कारयामास शिल्पशास्त्रविशारदैः ।
श्रीचक्रपश्चाद्भागे च कामाक्षीं स्वर्णनिर्मिताम् ।
प्रतिष्ठाप्य यतीशानः स्वयमेनामपूजयत ॥ ३१ ॥

## सर्वज्ञपीठारोहणम् ।

आधाय सौम्यवपुषं प्रकृतिं महोग्रामावाह्य विग्रहतनूमनुचक्रराजम् ।
आह्लादिते च विषये विबुधेषु चाप्तेष्वासादितेषु वशतां चरणौ वहत्सु ॥३२॥

सर्वज्ञपीठमारोढुं उत्सेहे देशिकोत्तमः ।
ततोऽशरीरिणी वाणी नभोमार्गाद्व्यजृम्भत ॥ ३३ ॥

भो यते भवता सर्वविद्यास्वपि विशेषतः ।
कृत्वा प्रसंगं विद्वद्भिर्जित्वा तानखिलानपि ॥ ३४ ॥

सर्वज्ञपीठमारोढुं उचितं ननु भूतले ।
इति वाचः समाकर्ण्य किमेतदिति विस्मितः ॥ ३५ ॥

किञ्चिदालोकयन्नास्त किं कुर्यामिति मानसे ।
ताम्रपर्णीसरित्तीरवासिनो विबुधास्तदा ॥ ३६ ॥

षड्दर्शिनीसुधावार्धिपारदृश्वगुणोन्नताः ।
आगत्य तं देशिकेन्द्रं प्रणिपत्येदमूचिरे ॥ ३७ ॥

भिदा सत्यमिवाभाति त्वया त्वैक्यं निगद्यते ।
देवभेदो मूर्तिभेदः प्रत्यक्षेणात्र लक्ष्यते ॥ ३८ ॥

स्वर्गादिफलभेदश्च सर्वशास्त्रविनिश्चितः ।
तत्प्रत्यक्षं च मिथ्येति कथयस्यधुना यते ।
इति भेदरतान्वादैश्चक्रे चाद्वैतनिष्ठितान् ॥ ३९ ॥

### श्रीसर्वज्ञात्मनः शिष्यतया स्वीकारः ।

श्रीमच्छङ्करदेशिकेन्द्रभणितैर्भुग्ने च भग्नानने
ताते वर्धननाम्नि सार्धमनुगैः श्रीताम्रपर्णीचरैः ।
सर्वज्ञासनमारुरुक्षति गुरौ धीरं निवर्त्य श्रुतौ
डिम्भः कोऽपि तमूनसप्तमसमो वादैररौत्सीत्स्वयहम् ॥ ४० ॥

तुर्येऽह्न्यथ शङ्करोदितसमाधाने प्रशान्ते शिशौ
तातादेर्धुरि संयियांसति च तं दृष्ट्वाऽतिहृष्टान्तरः ।
आषष्ठादप एव भुंक्त इतरन्नाख्याति पृष्टोऽप्यसौ
ओमित्येव गदत्यजस्रमिति तद्वृत्तं च तातादवैत् ॥ ४१ ॥

मत्वैनं सदृशाधिकारिणमधात्तं ब्रह्मदेशोद्भवं
प्राप्तानुज्ञमपि स्वतो जनयितुर्वाग्मी स वाचंयमम् ।
आख्यामप्यकरोत्स च महादेवाभिधस्याग्रतः
सर्वज्ञाभिधशङ्करार्य इति यं स्वस्याथ पीठे न्यधात् ॥ ४२ ॥

तत्र स्थितान्निगमशेखरदेशिकेन्द्रो वादे विजित्य विविधानपि वावदूकान् ।
पाणौ सनन्दनमसाववलंब्य विद्याभद्रासनं तदधिरोहितुमुच्चचाल ॥ ४३ ॥

भृङ्गारसान्द्रकमितासरणावजित्वा मामङ्ग साहसमिदं सहसा न कुर्याः ।
इत्यूचिषीं विधिवधूं च विजित्य विद्याभद्रासनं विधिरिव स्वयमध्यरुक्षत् ॥ ४४ ॥

ततो दिविषद्ध्वनि ध्वनिनिवारिताशावलीधुरन्धरसमीरितत्रिदशपाणिकोणाहतः ।
अरुन्ध हरिदन्तरं स्वरभरैर्भ्रमत्सिन्धुभिः घनाघनघनस्वनप्रथमबन्धुभिर्दुन्दुभिः ॥४५॥

कचभरनहनं पुलोमजायाः कतिचिदहान्यपगर्भकं यथा स्यात् ।
गुरुशिरसि तथा सुधाशनाः स्वस्तरुकुसुमान्यथ हर्षतोऽभ्यवर्षन् ॥ ४६ ॥

अद्वैतसिद्धान्तरहस्यमित्थं आचन्द्रतारार्कमनाकुलं सः ।
कृत्वा विकुर्वाणमनाः प्रणम्य तुष्टाव देवीं निगमान्तनीवीम् ॥ ४७ ॥

एणाङ्कानलभानुमण्डललसच्छ्रीचक्रमध्ये स्थितां
बालार्कद्युतिभासुरां करतलैः पाशाङ्कुशौ बिभ्रतीम् ।
चापं बाणमपि प्रसन्नवदनां कौसुम्भवस्त्रान्वितां
तां त्वां चन्द्रकलावतंसमकुटां चारुस्मितां भावये ॥ ४८ ॥

इत्थं पञ्चदशाक्षरीमनुगतैर्वर्णैः कृतोपक्रमैः
कामाक्षीं बहिराहितस्थितिमतीं पद्यैः समाराधयन् ।
कम्पातीरनिवासिनीं परचितं नन्तुं बिलाभ्यन्तरं
गच्छन् द्वारि कृतासिकां भगवतीं तुष्टाव स श्यामलाम् ॥ ४९ ॥

ओङ्कारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम् ।
आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम् ॥ ५० ॥

दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् ।
वामकुचनिहितवीणां वरदां सङ्गीतमातृकां वन्दे ॥ ५१ ॥

इत्थं तामभिवन्द्य विश्वजननीमीशामथान्तर्विशन्
कल्पानोकहकाननालिसुभगे कंपानदीरोधसि ।
कामाक्षीपदपद्मपूतशिखरं कञ्चित्पुरः काञ्चन-
क्षोणीभृत्कुलधूर्वहं प्रमुमुदे पश्यन् सपद्मञ्जसा ॥ ५२ ॥

इष्टामथ स योगीन्द्रश्चाष्टापदगिरिस्थिताम् ।
तुष्टाशयः सावरणां तुष्टाव परदेवताम् ॥ ५३ ॥

अकारादिक्षकारान्तवर्णावयवशालिनी ।
वीणापुस्तकहस्ताऽव्यात् प्रणो देवी सरस्वती ॥ ५४ ॥

तरङ्गभ्रुकुटीकोटिभंग्या तर्जयते जराम् ।
सुधामयाय शुभ्राय सिन्धूनां पतये नमः ॥ ५५ ॥

तस्य मध्ये मणिद्वीपः कल्पकारामभूषितः ।
अस्तु मे ललितावासः स्वस्तिदा अभयङ्करः ॥ ५६ ॥

कदम्बमञ्जरीनिर्यद्वारुणीपारणोन्मदैः ।
द्विरेफैर्वर्णनीयाय वनानां पतये नमः ॥ ५७ ॥

तत्र वप्रावलीलीलागगनोल्लङ्घिगोपुरम् ।
मातः कौतूहलं दद्यात् संहार्यं नगरं तव ॥ ५८ ॥

मकरन्दझरीमज्जन्मिलिन्दकुलसंकुलाम् ।
महापद्माटवीं वन्दे यशसा संपरीवृताम् ॥ ५९ ॥

तत्रैव चिन्तामणिघोरणार्चिभिः विनिर्मितं रोपितरत्नश्रृङ्गम् ।
भजे भवानीभवनावतंसं आदित्यवर्णं तमसः परस्तात् ॥ ६० ॥

मुनिभिः स्वात्मलाभाय यच्चक्रं हृदि सेव्यते ।
तत्र पश्यामि बुद्धया तदक्षरे परमे व्योमन् ॥ ६१ ॥

पञ्चब्रह्ममयो मञ्चः तत्र यो बिन्दुमध्यगः ।
तव कामेशि वासोऽयमायुष्मन्तं करोतु माम् ॥ ६२ ॥

नानारत्नगुलुच्छालीकान्तिकिर्मीलितोदरम् ।
विमृशामि वितानं तेऽतिश्लक्ष्णमतिलोमशम् ॥ ६३ ॥

पर्यङ्कतल्पोपरि दर्शनीयं सबाणचापाङ्कुशपाशपाणिम् ।
अशेषभूषारमणीयमीडे त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ ६४ ॥

जटारुणं चन्द्रकलाललामं उद्वेललावण्यकलाभिरामम् ।
कामेश्वरं कामशरासनाङ्कं समस्तसाक्षि तमसः परस्तात् ॥ ६५ ॥

तत्र कामेशवामाङ्कं खेलन्तीमलिकुन्तलाम् ।
सच्चिदानन्दलहरीं महालक्ष्मीमुपास्महे ॥ ६६ ॥

षोढान्यासादिदेवैश्च सेविता चक्रमध्यगा ।
कामेशमहिषी भूयः षोडशी शर्म यच्छतु ॥ ६७ ॥

श्रीचक्रस्थां शाश्वतैश्वर्यदात्रीं पौण्ड्रं चापं पुष्पबाणान् दधानाम् ।
बन्धूकाभां भावयामि त्रिनेत्रां तामग्निवर्णां तपसा ज्वलन्तीम् ॥ ६८ ॥

यथोपास्तिक्षतिर्न स्यात् तत्र चक्रस्य सुन्दरि ।
कृपया कुरु कल्याणि तथा मे स्वस्तिरायुषी ॥ ६९ ॥

यत्रैव यत्रैव मनो मदीयं तत्रैव तत्रैव तव स्वरूपम् ।
यत्रैव यत्रैव शिरो मदीयं तत्रैव तत्रैव पदद्वयं ते ॥ ७० ॥

एवं स्तुवंस्तामाराध्य कामाक्षीं ज्ञानरूपिणीम् ।
अथ तस्याश्च पूजायै ब्राह्मणान् विनियुज्य च ॥ ७१ ॥

एकाम्रेश्वरपूजार्थं विप्रानादिश्य भूयसः ।
श्रीमद्वरदराजस्य नमस्यायै न्ययुंक्त सः ॥ ७२ ॥

## कामकोटिपीठ-शारदामठप्रतिष्ठा ।

सर्वज्ञपीठमधिरुह्य ततस्तदग्रे मिश्रान्विजित्य सहसोपनतान्प्रयागात् ।
अध्यास्त काञ्चिमभिमण्डितकामकोटिपीठो मठं निजमवाप्य स शारदाख्यम् ॥ ७३ ॥

निन्ये योगिसुरेश्वरोपचरितः श्रीकामकोट्याह्वये
लोकाचार्यपदे स्थितः स दिवसान्सर्वज्ञपीठे सुखम् ।
ख्यातस्तत्र तदादि तेन विजितां वाणीमनुस्मारयन्
श्रीमच्छङ्करदेशिकस्य जयति श्रीशारदाख्यो मठः ॥ ७४ ॥

परकीयवपुःप्रवेशशैल्या स्मरतन्त्राणि विदन् वशी न लौल्यात् ।
अधितातनुभारतीं वशे यः सुकृतं मे सुतरां गुरुः स चीयात् ॥ ७५ ॥

उपयात्सु बुधेषु सर्वदिग्भ्यः प्रदिशन्नाशु पराभवं य एभ्यः ।
विधृताखिलवित्पदश्च काञ्च्यामधृतार्तिः स दिशेच्छ्रियं च कांचित् ॥७६॥

समतिष्ठिपदाहिमाद्रिसेव्यं क्रमशो धर्मविचारणाय दिव्यम् ।
अधिकाञ्चि च शारदामठं योऽप्यधिकं नरसुखमातनोतु सोऽयम् ॥ ७७ ॥

इति श्रीशङ्करविजयमकरन्दसारे त्रयोदश आस्वादः समाप्तः ॥

## ॥ चतुर्दश आस्वादः ॥

### पीठव्यवस्था तीर्थयात्रा च ।

पृथिवीधवपद्मपादहस्तामलकानन्दगिरीनतिप्रशस्तान् ।
चतुरोऽकृत यश्चतुर्षु पीठेष्वतुलां नश्चतुरो मुदं स देयात् ॥ १ ॥

ततो वेदविरुद्धानि विरुद्धानीतरेतरम् ।
विरुद्धानि सति क्षोदे निजाभ्युपगमैरपि ॥ २ ॥

अवैदिकानि तान्येष मतानि द्वैतवादिनाम् ।
धर्मशङ्करथारूढो वेदखड्गधरो विभुः ॥ ३ ॥

यथा श्वापदयूथानि लीलयाऽऽखेटयेन्नृपः ।
तथा विद्राव्य विज्ञानचक्रवर्ती यतीश्वरः ॥ ४ ॥

जगन्निरीतिकं चक्रे शङ्करः शङ्करेहितः ।
निर्विशेषं परं तत्वं गोचरीकर्तुमक्षमाः ॥ ५ ॥

ये भक्तिमन्तः श्रद्धाढ्याः मन्दास्तेष्वनुकम्पया ।
षण्मतस्थापनं कृत्वा सर्वानन्वग्रहीद्विभुः ॥ ६ ॥

शिवविष्ण्वंबिकाभानुगणेशस्कन्दमूर्तिषु ।
यत्र यस्य भवेत्प्रीतिः देवतायामुपासितुम् ॥ ७ ॥

स देवतां तां भजतां श्रद्धाभक्तिपुरस्सरम् ।
श्रुतिप्रसिद्धाः षडिमाः देवताः कामितप्रदाः ॥ ८ ॥

फलाभिसन्धिमुत्सृज्य भजतां मोक्षदाश्च ताः ।
श्रुतिस्मृतिसदाचारविरुद्धान्यत्र यानि वा ॥ ९ ॥

वर्जनीयान्यवद्यानि तानि तन्त्रोदितान्यपि ।
तानि पाषण्डमोहार्थमूचुर्हरिहरादयः ॥ १० ॥

श्रुतिघण्टापथे मोक्षमभिनिष्क्रामति स्थिते ।
किमर्थं वाऽतिदुर्गेण चङ्क्रुर्यध्वे कदध्वना ॥ ११ ॥

अनुशिष्टाः षडप्येवं भजन्तः स्वेष्टदेवताम् ।
तमेव परमाचार्यममन्यन्त पृथक्पृथक् ।
ततः श्रीशङ्कराचार्यो जगद्गुरुरितीर्यते ॥ १२ ॥

आदित्यं जगदम्बिकां हरिमिभेन्द्रास्यं महेशं गुहं
 पूजायै परिपूर्णमानसतया मेने यतिः शङ्करः ।
शिष्येभ्यश्च ददौ मुदा सुविमलां श्रीशैवपञ्चाक्षरीं
 विद्यां वैदिकमार्गदर्शनगुरुः श्रीषण्मतस्थापकः ॥ १३ ॥

अद्वैतमतनिविष्टैः पञ्चायतनार्चनं प्रकर्तव्यम् ।
एवं निर्णयमतनोद्वैदिकमार्गप्रवर्तको योगी ॥ १४ ॥

शैवादयः षड्यमिनो यतीशं संप्रार्थ्य तं स्वस्वमतोदयाय ।
अनुग्रहं प्राप्य जगद्गुरोश्च ते प्रस्थिताः स्वस्वमतप्रवीणाः ॥ १५ ॥

भूचक्रवाले संस्थाप्य श्रौतमद्वैतदर्शनम् ।
रक्षार्थं प्रचयार्थं च तस्य योगी व्यचिन्तयत् ॥ १६ ॥

अथ निष्कण्टकीभूता समुद्भूतेन सर्वतः ।
तत्वज्ञानेन वसुधा सस्येनेव विराजते ॥ १७ ॥

एतावता न मन्येऽहमात्मनः कृतकृत्यताम् ।
गते तु मयि सर्वं च पुनरप्याकुलीभवेत् ॥ १८ ॥

तस्माद्विद्यामठानन्यानपि काष्ठासु कारयन् ।
विद्याप्रवचनं शिष्यैरास्माकैस्तत्र तत्र च ॥ १९ ॥

प्रयोज्यास्मत्संप्रदायमविच्छिन्नं च कारये ।
पारंपर्यागते सम्यगुपदेशक्रमे सति ॥ २० ॥

न विच्छिद्येत सद्धर्म इति चक्रे मतिं शुभाम् ।
पुनः प्रतस्थे क्षेत्रादियात्रायै शङ्करो गुरुः ॥ २१ ॥

अहोबिलनृसिंहाख्यस्थले श्रीशङ्करो गुरुः ।
नृसिंहयन्त्रोद्धरणं चकार जगतां मुदे ॥ २२ ॥

पश्यन्ननिमिषं देवं भक्तानुग्रहतत्परम् ।
चेतः प्रबोधयामास तत्पदाब्जनिषेवणे ॥ २३ ॥

त्वत्प्रभुजीवप्रियमिच्छसि चेन्नरहरिपूजां कुरु सततं
प्रतिबिम्बालङ्कृतिधृतिकुशलो बिम्बालङ्कृतिमातनुते ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ २४ ॥

भीमरथ्यास्तटे रम्ये कृतावासं जगत्पतिम् ।
पाण्डुरङ्गं महायोगपीठे दृष्ट्वा ननाम तम् ॥ २५ ॥

महायोगपीठे तटे भीमरथ्या वरं पुण्डरीकाय दातुं मुनीन्द्रैः ।
समागत्य तिष्ठन्तमानन्दकन्दं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ २६ ॥

पाण्डुरङ्गं स्तुवन्नेवं भगवत्पादशङ्करः ।
तल्लीलाभिर्हृतस्वान्तस्तत्रोवास दिनत्रयम् ॥ २७ ॥

वाराणसीं योगिवरोऽधिगम्य भुजैरिव श्रीहरिरेष शिष्यैः ।
सहात्मना पञ्च मठानमीषां प्रकल्प्य तस्थौ कतिचिद्दिनानि ॥ २८ ॥

ततश्च रुक्मिणीकान्तविहारमहितां शुभाम् ।
प्रत्यक्सागरकल्लोलवेल्लितां द्वारकामगात् ॥ २९ ॥

श्रीकृष्णस्य प्रपौत्रेण वज्रेण परिकल्पितम् ।
श्रीकृष्णसद्म विध्वस्तं दृष्ट्वैर्जैनमतानुगैः ॥ ३० ॥

कारयामास भूपेन विनीतेन सुधन्वना ।
प्राकारोत्तुङ्गशृङ्गाढ्यं रम्यं कनकरञ्जितम् ॥ ३१ ॥

क्षेत्रोत्तमे मठं तत्र सामवेदप्रधानकम् ।
निर्माय गोमतीतीर्थे श्रीसिद्धेश्वरसन्निधौ ॥ ३२ ॥

सुरेश्वरं प्रतिष्ठाप्य तत्र व्याख्यानदेशिकम् ।
सशिष्यः प्राप मधुरामभीष्टं स्थानमीशितुः ॥ ३३ ॥

तत्र श्रीबालकृष्णस्य बाललीलायितेषु यत् ।
एकान्तसाक्षि तत्साक्षात्कर्तुं गोकुलमाययौ ॥ ३४ ॥

वृन्दावनं बालकृष्णपादधूलीपवित्रितम् ।
दर्शंदर्शं कुतुकितः तत्तल्लीलागतस्मृतिः ॥ ३५ ॥

श्रीकृष्णलीलापूतेऽत्र क्षेत्रे वृन्दावने गुरुः ।
निनाय कतिचिन्मासान् तद्ध्यानधृतमानसः ॥ ३६ ॥

मार्गे कश्चिद्वैयाकरणः पदनिष्पत्त्यध्ययनधुरीणः ।
कर्तव्यान्तरनिश्चिन्तोऽसौ बोधित आसीच्छङ्करगुरुणा ॥ ३७ ॥

भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते ।
संप्राप्ते सन्निहिते काले न हि नहि रक्षति डुकृञ्करणे ॥ ३८ ॥

भगवद्गीता किञ्चिदधीता गङ्गाजललवकणिका पीता ।
सकृदपि येन मुरारिसमर्चा क्रियते तस्य यमेन न चर्चा ॥ ३९ ॥

गुरुचरणाम्बुजनिर्भरभक्तः संसारादचिराद्भव मुक्तः ।
सेन्द्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम् ॥ ४० ॥

मोहध्वान्तनिराकृतिकुशलैः पद्यैर्वैयाकरणस्यैषः ।
उपदेशोऽभूद्विद्यानिपुणैः श्रीमच्छङ्करभवच्चरणैः ॥ ४१ ॥

इति श्रीशङ्करविजयमकरन्दसारे चतुर्दश आस्वादः समाप्तः ॥

# पञ्चदश आस्वादः

ततो जगाम बदरीं भाष्यप्रणयनस्थलीम् ।
नद्यामलकनन्दायां निर्वर्तितनिजक्रियः ॥ १ ॥

तपस्यन्तावृषी तत्र नरनारायणौ स्तुवन् ।
श्रीमठं तत्र निर्माय तत्राथर्वणमुख्यकम् ।
विदधे तोटकाचार्यं व्याख्यातारं जगद्गुरुः ॥ २ ॥

मुक्तिलिङ्गं तु केदारे नीलकण्ठे वरेश्वरम् ।
प्रतिष्ठाप्य महायोगी परां प्रीतिमवाप सः ॥ ३ ॥

जगन्नाथमथ प्राप दीनानाथान् सनाथयन् ।
साक्षाद्विसृज्य वैकुण्ठं यत्रैवोत्कण्ठते हरिः ॥ ४ ॥

महोदधिर्यत्र तीर्थं जगन्नाथपुरोभुवि ।
द्वारकावासिनो विष्णोस्तनुरद्यापि वर्तते ॥ ५ ॥

अवाप क्षेत्रराजं तमवलोक्य समन्ततः ।
दिनानि कतिचित्तत्र निवासमकरोन्मुदा ॥ ६ ॥

तत्रांभोधौ कृतस्नानो जगन्नाथेश्वरं हरिम् ।
प्रार्थयामास नयनपथगामी भवत्विति ॥ ७ ॥

भुजे सव्ये वेणुं शिरसि शिखिपिञ्छं कटितटे
दुकूलं नेत्रान्ते सहचरकटाक्षं च विदधत् ।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८ ॥

अत्र श्रीशङ्कराचार्यवर्येणाशाज्यान्तरे ।
बौद्धादीन् कुमतान् जित्वा विवादे युक्तिसंमिते ॥ ९ ॥

महोदधेस्तटे क्षेत्रे पुरुषोत्तमसंज्ञके ।
जगन्नाथं दारुमयं प्रतिष्ठाप्य यथाविधि ॥ १० ॥

भूतेन्द्रियांगनेत्राब्दे (२६५५) युधिष्ठिरशकस्य वै ।
वैशाखे शुक्ले पक्षे दशम्यां शोभने दिने ॥ ११ ॥

गोवर्धनमठे रम्ये विमलापीठसंज्ञके ।
पूर्वाम्नाये भोगवारे श्रीमत्काश्यपगोत्रजः ॥ १२ ॥

माधवस्य सुतः श्रीमान् सनन्दन इति श्रुतः ।
प्रकाशब्रह्मचारी च ऋग्वेदी सर्वशास्त्रवित् ॥ १३ ॥

श्रीपद्मपादः प्रथमाचार्यत्वेनाभ्यषिच्यत ।
श्रीमत्परमहंसादिविरुदैरखिलैः सह ॥ १४ ॥

श्रीशङ्करार्ययोगी शृङ्गगिरिस्थानमगमदखिलेशः ।
श्रीशारदाख्यपीठे शिवलिङ्गं भोगनामकं चक्रे ॥ १५ ॥

शिवलिङ्गं प्रतिष्ठाप्य चिदम्बरसभातले ।
मोक्षदं सर्वजन्तूनां भुवनत्रयसुन्दरम् ॥ १६ ॥

वैदिकान् दीक्षितान् शुद्धान् शैवसिद्धान्तपारगान् ।
पूजार्थं युयुजे शिष्यान् पुण्यारण्यविहारिणः ॥ १७ ॥

सर्वज्ञः शिष्यसंयुक्तः शङ्करो देशिकेश्वरः ।
भूमिं प्रदक्षिणीकृत्य भूयः काञ्चीपुरीं गतः ॥ १८ ॥

काञ्चयां श्रीकामकोटौ तु योगलिङ्गमनुत्तमम् ।
प्रतिष्ठाप्य सुरेशार्यं पूजार्थं युयुजे गुरुः ।
यथाधिकारमाचार्यः सर्वाननुशशास ह ॥ १९ ॥

## आचार्याणामनुशासनम् ।

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयतां
आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिष्क्रम्यताम् ॥ २० ॥

अस्मत्पीठसमारूढः परिव्राडुक्तलक्षणः ।
अहमेवेति विज्ञेयो यस्य देव इति श्रुतेः ॥ २१ ॥

सुधन्वनः समौत्सुक्यनिवृत्त्यै धर्मसेतवे ।
देवराजोपचारांश्च यथावत्तत्र कल्पयेत् ॥ २२ ॥

केवलं धर्ममुद्दिश्य विभवो बाह्यचेतसाम् ।
विहितश्चोपकाराय पद्मपत्रनयं व्रजेत् ॥ २३ ॥

सुधन्वाद्या महाराजा ह्यलाद्याश्च महीश्वराः ।
धर्मपारंपरीमेतां पालयन्तु निरन्तरम् ॥ २४ ॥

आसेतोरा हिमाद्रेश्च सेव्या मत्पीठसंश्रयाः ।
तथा मच्छिष्यपीठीयाः सर्वेऽप्याचार्यसम्मिताः ॥ २५ ॥

इत्येवमनुशिष्टास्ते नित्यकर्मपरायणाः ।
पञ्चयज्ञपरा नित्यं देवतातिथिपूजकाः ।
वेदमार्गैकनिरता जाताः सर्वे मुमुक्षवः ॥ २६ ॥

सर्वज्ञात्मश्रीचरणैः संक्षेपशारीरकप्रणयनम् ।

श्रीदेवेश्वरपादपङ्कजरजस्संपर्कपूताशयः
सर्वज्ञात्मगिरांकितो मुनिवरः संक्षेपशारीरकम् ।
चक्रे सज्जनबुद्धिवर्धनमिदं राजन्यवंशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति ॥ २७ ॥

वस्तुख्यातिविधाति वादितिमिरं नैष्कर्म्यसिद्धिस्फुट-
व्याख्याचन्द्रिकया विधूय सुधियां सद्दृष्टिमुन्मीलयन् ।
अन्तः संभृतशान्तिवेदनसुधोद्द्योतः समुद्योतते
सर्वज्ञाश्रमचन्द्रमास्त्रिजगतीसर्वज्ञचूडामणिः ॥ २८ ॥

शक्तो गुरोश्चरणयोर्निकटे निवासान्नारायणस्मरणतश्च निरन्तरायः ।
शारीरकार्थविषयावगतिप्रधानं संक्षेपतः प्रकरणं कृतवान् प्रहृष्यन् ॥ २९॥

तद्दृष्ट्वाऽथ स ऊचिवानतितरां हृष्टो गुरुश्शङ्करः
नाम्ना यद्यपि लोक एष भविता संक्षेपशारीरकः ।
स्वीयैरन्यनिबन्धदुर्लभतरैरोजःप्रसादादिभिः
सर्वानेव गुणैस्तथापि बृहतो ग्रन्थान् विजेजेष्यते ॥ ३० ॥

वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽऽसीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शङ्करमर्चितांघ्रिम् ॥ ३१ ॥

यदीयसंपर्कमवाप्य केवलं वयं कृतार्था निरवद्यकीर्तयः ।
जगत्सु ते तारितशिष्यपंक्तयो जयन्ति देवेश्वरपादरेणवः ॥ ३२ ॥

यो वै मण्डनमिश्रविद्वदधिपस्यापाद्य सन्न्यासितां
तन्मूर्ध्नि व्यसनापनोदनविधावाकर्पयन्नश्विनौ ।

भैषज्यं कलयांबभूव कुपितस्येन्द्रस्य वज्रायुधं
चूर्णीकृत्य पुनर्ददौ हरिपदे चक्रे तमेनं भजे ॥ ३३ ॥

ततः काञ्च्यां महापुर्यां निवसन्नेकदा गुरुः ।
ज्ञात्वा निजशरीरान्तं सह शिष्यैः प्रसन्नधीः ॥ ३४ ॥

कम्पायां विधिवत्स्नात्वा नत्वैकाम्रनिवासिनम् ।
कामाक्षीसदनं प्राप चक्रे तस्य प्रदक्षिणम् ॥ ३५ ॥

गोपुरेणान्तराविश्य नत्वा देवीं यतीश्वरः ।
सौन्दर्यलहरीमुख्यैः स्तोत्रैस्तुष्टाव निर्वृतः ॥ ३६ ॥

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवी न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ ३७ ॥

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ३८ ॥

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥ ३९ ॥

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणां
इति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः ।

तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदाम् ॥ ४० ॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥ ४१ ॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ४२ ॥

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयःपारावारः परिवहति सारस्वतमिव ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ४३ ॥

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ४४ ॥

ददाने दीनेभ्यः श्रियमनिशमाशानुसदृशीं
अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।
तवास्मिन् मन्दारस्तबकसुभगे यातु चरणे
निमज्जन्मज्जीवः करणचरणः षट्चरणताम् ॥ ४५ ॥

कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।

प्रकृत्या मूकानामपि च कविताकारणतया
कदा धत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ४६ ॥

निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे
निराघाटज्ञाने नियमपरचित्तैकनिलये ।
नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतपदे
निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् ॥ ४७ ॥

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥ ४८ ॥

प्रागष्टमाद्विदितवेद्यमुदूढबाल्यं सर्वज्ञसंज्ञमथ हंसितमात्मनैव ।
श्रीकामकोटिविरुदे न्यदधात्स्वपीठे गुप्तं स्वशिष्यतिलकेन सुरेश्वरेण ॥४९॥

अथ निश्चित्य मनसा श्रीमान् शङ्करदेशिकः ।
मठे श्रीशारदाभिख्ये सर्वज्ञं निदधन्मुनिम् ॥ ५० ॥

सुरेश्वरं वृत्तिकृतमन्तिकस्थं सदाऽऽदरात् ।
समं संस्थाप्य तस्मै स्वं वक्तुं भाष्यं समन्वशात् ॥ ५१ ॥

स्वशिष्यपारंपर्येण लिङ्गं स्वं योगनामकम् ।
सेवयैनं कामकोटिपीठे सार्धं वसेति च ॥ ५२ ॥

इत्याज्ञां संप्रदायास्मै त्यक्तपीठमठस्पृहः ।
कामाक्ष्या निकटे जातु सन्निविश्य जगद्गुरुः ॥ ५३ ॥

देहिभिर्दुर्भजं भेजे देहं तत्रैव सन्त्यजन् ।
अखण्डज्योतिरानन्दमक्षरं परमं पदम् ॥ ५४ ॥

स एव शङ्कराचार्यो गुरुर्मुक्तिप्रदः सताम् ।
अद्यापि मूर्तं चैतन्यमिव तत्रैव तिष्ठति ॥ ५५ ॥

इत्थं स शङ्करगुरुः कृतकृत्यभावात् भावान्प्रकाश्य निगमान्तगिरां निगूढान् ।
काञ्च्यां विमुच्य वपुराद्दतमिच्छयैव स्वस्यैव धाम्नि परमे स्वत एव लिल्ये ॥ ५६ ॥

गामाक्रम्य पदेऽधिकाञ्चि निबिडं स्कन्धैश्चतुर्भिस्तथा
व्यावृण्वन् भुवनान्तरं परिहरंस्तापं समोहज्वरम् ।
यः शाखी द्विजसंस्तुतः फलति तत्स्वाद्यं रसाख्यं फलं
तस्मै शङ्करपादपाय महते तन्मत्त्रिसन्ध्यं नमः ॥ ५७ ॥

तद्योगभोगवरसिद्धिविमुक्तिनामलिङ्गार्चनात्प्राप्तजयः स्वकाश्रमे ।
प्राप्तान्विजित्य तरसाऽक्षतशास्त्रवादैः मिश्रान् स काञ्च्यामथ सिद्धिमाप ॥ ५८ ॥

अद्वैतमातुहिनभूधरमा च सेतोराधाय सर्वसुमनश्चयसंमतार्थम् ।
त्यक्ताङ्कनाद्यवगुणान्पपि षण्मतानि शैवादिमानि च निरुच्य यथाऽधिकारम् ॥५९॥

वाणीं विजित्य च वियद्विशदामदेहां सर्वज्ञपीठमधिरुह्य च तत्र काञ्च्याम् ।
विद्वद्वरार्चितपदो यमिसार्वभौमो देव्याः पुरः परतरे पुरुपे विलिल्ये ॥ ६० ॥

महेशांशाज्जातो मधुरमुपदिष्टाद्वयनयो
महामोहध्वान्तप्रशमनरविः षण्मतगुरुः ।
फले (३२) स्वस्मिन् स्वायुष्यपि शरचराब्देऽपि (२६२५) च कलेः
विलिल्ये रक्ताक्षिण्यधिवृषसितैकादशि परे ॥ ६१ ॥

कल्यब्दैश्च शरेक्षणाध्वनयनैः (२६२५) सत्कामकोटिप्रथे
पीठे न्यस्य सुरेश्वरं समवितुं सर्वज्ञसंज्ञं मुनिम् ।
कामाक्ष्याः सविधे स जातु निविशन्नुन्मुक्तलोकस्पृहो
देहं स्वं व्यपहाय देहसुगमं धाम प्रपेदे परम् ॥ ६२ ॥

परमन्तिकसत्सुरेश्वराद्यैः परमाद्वैतमतं स्फुटं प्रवेद्य ।
परिकाञ्चिपुरं परे विलीनः परमायास्तु शिवाय सद्गुरुर्नः ॥ ६३ ॥

पीठे तिष्ठति कामकोटिविरुदे यः शारदाख्ये मठे
देहीवादिमशङ्करार्यनियमव्रातो व्रतिष्ठोऽधुना ।
नेपालादिनृपालमौलिविधृतश्रीशासनो नः शिवं
देयादेष जगद्गुरुः स विपुलानन्दाकृतिः शङ्करः ॥ ६४ ॥

काञ्चीपुराभरणकामदकामकोटिपीठाभिषिक्तवरदेशिकसार्वभौम ।
सार्वज्ञ्यशक्त्यधिगताखिलमन्त्रतन्त्रचक्रप्रतिष्ठितिविजृंभितचातुरीक ॥६५॥

स्वामिन् ! जय !! विजयीभव !!!

कारणपरचिद्रूपा काञ्चीपुरसीम्नि कामपीठगता ।
काचन विहरति करुणा काश्मीरस्तबककोमलाङ्गलता ॥ ६६ ॥

कामपरिपन्थिकामिनि कामेश्वरि कामपीठमध्यगते ।
कामदुघा भव कमले कामकले कामकोटि कामाक्षि ॥ ६७ ॥

जय जय जगदम्ब शिवे जय जय कामाक्षि जय जयाद्रिसुते ।
जय जय महेशदयिते जय जय चिद्गगनकौमुदीधारे ॥ ६८ ॥

महात्रिपुरसुन्दरीरमणचन्द्रमौलीश्वर-
प्रसादपरिलब्धवाङ्मयविभूषिताशान्तरम् ।
निरन्तरमुपास्महे निरुपमात्मविद्यानदी-
नदीनदपतिप्रभं मनसि शङ्करार्यं गुरुम् ॥ ६९ ॥

इति श्रीशङ्करविजयमकरन्दसारे पञ्चदश आस्वादः समाप्तः ॥

---

श्रीशङ्करविजयमकरन्दसारः समाप्तः ॥

